गतेषुतेषुसनृपः पुत्रेणसहभारत भूभुजांबुभुजेभोगान् पूर्वकर्मार्जितान् शुभान् अक्रूरेणसमाख्यातंममपूर्वंयुधिष्ठिर एतत्त्रिलोक-
तिलकाख्यविभूषितंचपुण्यव्रतंसकलदुष्टहरंपरंच इत्थंसमाचरतियःस्फुरत्स्वविल्हत्यमर्त्यः प्रयातिपदमच्युतमिंदुमौलेः इतितिलकव्रतं
अस्यामेवनवरात्रारंभः तत्रपरशुरामाख्या अमावास्यकानकर्तव्याप्रतिपच्चंडिकार्चने मुहूर्तमात्राकर्तव्याद्वितीयायांगुणान्विता अत्रैवप्र
पादानमुक्तं अतीतेफाल्गुनेमासिप्राप्तेचैवमहोत्सवे पुण्येऽह्निविप्रकथितंप्रपादानंसमारभेत् ततश्चोत्सर्जयेद्विद्वान्मंत्रेणानेनमानवः प्रपे
यंसर्वसामान्यभूतेभ्यःप्रतिपादिता अस्याःप्रदानात्पितरस्तृप्यंतुहिपितामहाः अनिवार्यंततोदेयंजलंमासचतुष्टयं प्रपांदातुमशक्ते
नविशेषाद्धर्मसीप्सुना प्रत्यहंधर्मघटकोवस्त्रसंवेष्टिताननः ब्राह्मणस्यगृहेदेयःशीतामलजलःशुचिः एषधर्मघटोदत्तोब्रह्मविष्णु
शिवात्मकः अस्यप्रदानात्सकलाममसंतुमनोरथाः अनेनविधिनायस्तुधर्मकुंभंप्रयच्छति प्रपादानफलंसोपिप्राप्नोतीहनसंशयः इ
तिप्रपादानं अथश्रावणशुक्लप्रतिपदिसोमवारमारभ्याचारमासंरोटकव्रतं अथसर्वशिवव्रतेषुपूजाविधिः ममेहजन्मनिसमस्तसौभाग्यप्रा
प्त्यर्थंधनपुत्रप्राप्तिकामःसार्धमासत्रयात्मकंरोटकासोमेश्वरप्रीत्यर्थंबिल्वव्रतंकरिष्ये तत्रसोमेश्वरपूजनं कार्तिकशुक्लचतुर्दश्यांउद्यापनं
मयाअनुष्ठितस्यसार्धमासत्रयात्मकबिल्वव्रताख्यस्यकर्मणःसांगतासिद्ध्यर्थंबिल्वरोटकाव्रतोद्यापनंकरिष्ये तंदुलैरष्टदलंकृत्वा तत्रसप्तमालूलो-
कपालांश्चपूजयेत् मध्येसोमेश्वरं आयाहिभगवन्शंभोशर्वत्वंगिरिजापते प्रसन्नोभवदेवेशनमस्तुभ्यंहिशंकर त्रिपुरांतकरंदेवंचंद्रचूडंमहाद्युतिं गज

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चर्मपरीधानंसोममावाहयाम्यहं आवाहनं बंधूकसन्निभंदेवंत्रिनेत्रंचंद्रशेखरं त्रिशूलधारिणंदेवंचारुहासंस्फटिनिर्मलं कपालधारिणंदेवंव
रदाभयहस्तकं उमयासहितंशंभुंध्यायेत्सोमेश्वरंसदा ध्यानं विश्वेश्वरमहादेवराजराजेश्वरप्रिय आसनंदिव्यमीशानदास्येहंतुभ्यमी
श्वर आसनं महादेवमहेशानमहादेवपरात्पर पाद्यंगृहाणमद्दत्तंपार्वतीसहितेश्वर पाद्यं त्र्यंबकेशसदाचारजगदादिविधायक अर्घ्यं
गृहाणदेवेशसांबसर्वार्थदायक अर्घ्यं त्रिपुरांतकदीनार्तिनाशश्रीकंठशाश्वत गृहाणाचमनीयंचपवित्रोदककल्पितं आचमनीयं क्षी
रमाज्यंदधिमधुशर्कराचामृतंपयः प्रकल्पितंमयोमेशगृहाणेदंजगत्पते पंचामृतं गंगागोदावरीरेवापयोष्णीयमुनातथा सरस्वत्यादितीं
र्थानिस्नानार्थंप्रतिगृह्यतां स्नानं वस्त्राणिपट्टकूलानिविचित्राणिनवानिच मयानीतानिदेवेशप्रसन्नोभवशंकर वस्त्रं सौवर्णंराजतंता
म्रंकार्पासस्यतथैवच उपवीतंमयादत्तंप्रीत्यर्थंप्रतिगृह्यतां उपवीतं सर्वेश्वरजगद्वंद्यदिव्यासनसमस्थित गंधंगृहाणदेवेशचंदनंप्रतिगृह्य
तां गंधं गंधोपरिस्फटिकाक्षतान् अक्षताश्चसुरश्रेष्ठाःशुभ्राधूताश्चनिर्मलाः मयानिवेदिताभक्त्यागृहाणपरमेश्वर अक्षतान् माल्या-
दीनिस्फ॰ पुष्पाणि वनस्पतीतिधूपं आज्यंचेतिदीपं अपूपानिचपक्वानिमंडकावटकानिच पायसंसूपमन्नंचनैवेद्यंप्रतिगृह्यतां नैवे
द्यं मध्येपानीयं करोद्वर्तनं कूष्मांडंमातुलिंगंचनारिकेरफलानिच गृहाणपार्वतीकांतसोमेशप्रतिगृह्यतां फलं पूगीफलमितितांबूलं हि
रण्यगर्भेतिदक्षिणां अग्निर्ज्योतिरविर्ज्योतिर्ज्योतिर्नारायणोविभुः नीराजयामिदेवेशंपंचदीपैःसुरेश्वरं नीराजनं हेतवेजगतामेवसंसारा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

र्णवसेतवे प्रभवेसर्वविद्यानांशंभवेगुरवेनमः नमस्कारः यानिकानिचेतिप्रदक्षिणाः हरिविश्वाखिलाधारनिराधारनिराश्रय पुष्पांजलिंगृहा
णेशसोमेश्वरनमोस्तुते पुष्पांजलिं बिल्वपत्रंसुवर्णेनत्रिशूलाकारमेवच मयार्पितंतुतच्छंभोबिल्वपत्रंगृहाणमे बिल्वपत्रार्पणं अथ
कथा युधिष्ठिरउवाच हृषीकेशमयाकारिव्रतदानान्यनेकधा श्रोतुमिच्छामिदेवेशव्रतंसंपत्तिदायकं येनव्रतेनदेवेशपुराराज्यंलभाम
हे तथाव्रतंतुमेब्रूहियादवानांकृपाकर श्रीभगवानुवाच वदामिशुभदंपार्थलक्ष्मीवृद्धिप्रदायकं धर्मार्थकाममोक्षाणांनिदानंपरमंव्र
तं युधिष्ठिरउवाच येनचादौपुराचीर्णंमर्त्यैकेनप्रकाशितं विधिनाकेनकर्तव्यंतत्सर्वंब्रूहिकेशव श्रीभगवानुवाच आसीत्सौम्यपुरेरा
जासोमनामेतिविश्रुतः क्षात्रधर्मेतिकुशलःप्रजापालनतत्परः तस्यराज्येप्रजाःसौम्याःसर्वधर्मपरायणाः तस्यराज्ञस्तुचामात्यःसो
पिसौम्यःशुभावहः तस्मिन्सरस्तुसौम्यंचसदासौम्यांबुनाप्लुतं अभूत्सोमेश्वरोदेवोलोकानांपालनायच तत्राभवत्सोमशर्माब्राह्मणोवेद
पारगः वेदार्थविच्छास्त्रविच्चशुद्धाचारोतिदुर्लभः तस्यभार्याशुभाचारापुरंध्रीचारुभाषिणी भर्तृशुश्रूषणरताकल्याणीप्रियवादि-
नी सोकरोच्चकुटुंबार्थंकणयज्ञंदिनेदिने नलभ्यतेधिकंतेनधनंधान्यंतथैवच अतीवखेदखिन्नस्तुचिंतार्तश्चपुनःपुनः किंकरोमिक्व
गच्छामिसभार्योहंमहीतले केनकर्मविपाकेनकीदृशंलभ्यतेफलं अथवार्थकरंधर्मंदेवपूजादिकंशुभं ससोमेशोकरोद्भक्तिंदैन्य-
नाशायपार्थिव कदाचिदतिखिन्नःसन्सजगामसरोवरं अभूत्सोमेशःप्रत्यक्षस्तस्मिन्सौम्यसरोवरे वृद्धब्राह्मणरूपेण कृपया

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

परयायुक्तः तेनासीदुःखितोदृष्टःसोमशर्माद्विजोत्तमः किमर्थंक्रियतेदुःखंत्वयाविप्रवरेणच किंचिद्वृत्तंनास्तिपूर्वंतदर्थमीदृशीदशा तस्यतद्वचनंश्रुत्वाब्राह्मणस्त्विदमब्रवीत् भोभोविप्रवरश्रेष्ठव्रतमेकंवदामिते तेनादिष्टव्रतंचेदंपूर्णसंपत्तिदायकं सोमशर्मोवाच भोभोब्राह्मणशार्दूलव्रतंतद्वदमेप्रभो यस्यानुष्ठानमात्रेणलक्ष्मीवृद्धिःप्रजायते कस्मिन्मासेचकर्तव्यंकिंदानंकस्यभोजनं धनलाभायकर्तव्यंकस्यदेवस्यपूजनं कैस्तुपुष्पैःप्रकर्तव्यापूजाचारुतराशुभा नैवेद्यंकीदृशंदेयंअर्घ्यंकैस्तुफलैर्भवेत् यदिवुध्योसिविप्रेंद्रतत्सर्वंब्रूहिमेप्रभो ब्राह्मणउवाच साधुत्वयाविप्रदृष्टंव्रतंवृद्धिप्रदायकं विधानंतस्यवक्ष्यामिसर्वसिद्धिप्रदायकं श्रावणेचसितेपक्षेप्रथमेसोमवासरे प्रकर्तव्यंव्रतंविप्रशुभंनियमपूर्वकं सार्धमासत्रयंविप्रकर्तव्यंविधिपूर्वकं बिल्वपत्रैरखंडैश्चपूजनंचदिनेदिने पंचसप्तत्रिभिश्चैवपूजनंविधिपूर्वकं परिपूर्णंतुकर्तव्यंचतुर्दश्यांतुकार्तिके व्रतारंभेतुकर्तव्योनियमस्तुविचक्षणैः अद्यारंभेव्रतंदेवरोटकाख्यंमनोहरं करोमिपरयाभक्त्यापाहिमांजगतांगुरो दिनेदिनेप्रकर्तव्यापूजादेवस्यशूलिनः कथांविनाननभोक्तव्यमत्यहंचपुनःपुनः उपोषणंचतुर्दश्यांकर्तव्यंविधिपूर्वकं शुचिर्भूत्वादिनेतस्मिन्कर्तव्यंरोटकाव्रते अथउपोषणप्रार्थनामंत्रः चतुर्दश्यांनिराहारःस्थित्वाचैवपरेहनि भोक्ष्यामिपार्वतीनाथसर्वसिद्धिप्रदायक कृत्वामाध्यान्हिकंकर्मस्थापयेदव्रणंघटं पंचरत्नसमायुक्तंपुष्पादिभिरलंकृतं वेष्टितंश्वेतवस्त्रेणसर्वाभरणभूषितं तस्योपरिन्यसेत्पात्रंताम्रंचैवाथ

वैष्णवं विरच्याष्टदलं तत्र पूजयेदुमया शिवं कृत्वा सायान्हिकं कर्म नित्यपूजादिकं तथा तस्यां रात्रौ तु कर्तव्या पूजा देवस्य शूलिनः शु
भे चैव प्रदेशे तु कर्तव्यः पुष्पमंडपः पूज्यस्तत्र शिवो देवो सर्वकामार्थसिद्धये क्षीरादिस्नापनं कुर्याच्चंदनादिविलेपनं कृष्णागरु च कर्पूरमृग
नाभिविमिश्रितं पुष्पैर्नानाविधै रम्यैः पूज्यो देवो महेश्वरः धनकामेन कर्तव्या पूजा देवस्य शूलिनः बिल्वपत्रैरखंडैश्च तुलसीपत्रकैस्तथा
नीलोत्पलैश्चारुतरैः कर्तव्या पुण्यवर्धिनी कल्हारकमलैश्चैव कुमुदैश्चातिशोभनैः चंपकैर्मालतीपुष्पैर्मुचकुंदैः शुभावहैः मंदारैश्चार्कपुष्पै
श्च पूजार्हैश्च शिवप्रियैः अन्यैर्नानाविधैः पुष्पैर्ऋतुकालोद्भवैस्तथा धूपैर्नानाविधैः पार्थ पुण्यवर्धनसाधकैः दीपास्तत्र प्रकर्तव्या घृतपूर्णमनोर
थाः लेह्यपेयैस्तथा भोज्यैः स्वादुभिश्च शिवप्रियैः अन्यैर्नानाविधै रम्यैस्तथा विभवैस्ततः नैवेद्यं तु प्रकुर्वीत रोटकानां विशेषतः कर्तव्या रोट
काः पंचपुरुषाहारमानकाः शालितंदुलपिष्टेन समभागेन वा पुनः द्वौ तु विप्राय दातव्यौ द्वाभ्यां वै भोजनं शुभं एको देवाय दातव्यो नैवेद्यार्थं
सदा बुधैः महेशाय च दातव्यं तांबूलं सुमनोहरं अर्घ्यदानं प्रकर्तव्यं धनसंपत्तिदायकं पनसं नारिकेरं च पूगं जंबीरपूरकं खर्जूरीं च शुभां द्राक्षा
मातुलिंगं मनोहरं अक्षोडानि च दाडिबं नारिंगानि शुभानि च कर्कटीं च शुभां प्रोक्ता अर्घ्यदाने मनोहरा अन्यैर्नानाविधैः पार्थ ऋतुकालोद्भवैः
शुभैः यः करोत्यर्घ्यदानं च तस्य पुण्यं वदाम्यहं इलां च सागरैर्युक्तां रत्नैश्चान्यैर्मनोहरैः दत्वा यत्फलमाप्नोति तेन तत्फलमाप्नुयात् अनेनैव
विधानेन तत्कार्यं व्रतसिद्धये पंचवर्षं तु कर्तव्यमतुलं धनमीप्सुभिः पश्चादुद्यापनं कुर्याद्रोटकाख्यव्रतस्य च उद्यापने तु कर्तव्यो हेमरूप्यो

तुरोदको बिल्वपत्रं सुवर्णस्य सोमेशप्रीतये शुभं रात्रौ जागरणं कुर्यात्कृत्यो देवो महेश्वरः पूर्णेन विधिनापि प्रकर्तव्यं न शिवप्रियं दारिद्र्य
नाशनं पुण्यलक्ष्मीवृद्धिप्रदायकं कर्तव्यं विधिवद्भक्त्या श्रोतव्यं तु कथानकं गीतवाद्यादिसहितं कुर्याज्जागरणं निशि ततः प्रभाते वि-
मले स्नात्वा पूजां समापयेत् पूर्वोक्तविधिना तेन कर्तव्यं शिवपूजनं तत्सर्वं दापयेद्भक्त्या ब्राह्मणाय कुटुंबिने विप्राय वेदविदुषे व
स्त्रालंकारभोजनैः गुरुं सपत्निकं पूज्य ततो भक्त्या क्षमापयेत् यन्मया कृतसंकल्पो व्रतेस्मिन्ब्राम्हण प्रभो तत्सर्वं पूर्णतां यातु युष्म
द्दृष्टिविलोकनात् एवं यः कुरुते पार्थ शास्त्रोक्तं रोटकव्रतं अनायासेन सिध्यंति हृद्याः सर्वे मनोरथाः सभर्तृका महानारी करोति
विधिवद्व्रतं पतिव्रता सा कल्याणी जायते नात्र संशयः मया अनुष्ठितस्य सार्धमासत्रयात्मकस्य बिल्वव्रताख्यस्य कर्मणः सांगता
सिध्यर्थं ब्राम्हणाय एतद्वायनप्रदानं करिष्ये ब्राह्मणं संपूज्य विप्राय वेदविदुषे श्रोत्रियाय कुटुंबिने नरकोत्तारणार्थाय शंकरः प्री
यतां नमः इति दानमंत्रः इति शिवपुराणे बिल्वरोटकसोमनाथव्रतकथोद्यापनं अथाश्विनशुक्लप्रतिपदि दौहित्रेण मातामहश्रा
द्धं कार्यं तदुक्तं हेमाद्रौ जातमात्रोपि दौहित्रो जीवत्यपि च मातुले कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते इयं च संगवव्यापिनी ग्राह्ये
ति निर्णयदीपे उक्तं प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणं श्राद्धं मातामहं कुर्यात्सपिता संगवे सति जातमात्रोपि दौहित्रो जीवत्य
पि हि मातुले प्रातः संगवयोर्मध्ये याश्वयुक्प्रतिपद्भवेत् अत्र पिता इति विशेषणात् जीवत्पितृक एवाधिकारी अत एव पिंडरहितं कुर्यात् मुं





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ड्नं पिंडदानंचप्रेतकर्मचसर्वशः नजीवत्पितृकःकुर्यात्गुर्विणीपतिरेवच अत्रैवनवरात्रारंभः तत्रपरविद्धाग्राह्या तदुक्तंगोविंदार्णवेमा-
र्कंडेयपुराणेदेविपुराणयोः पूर्वविद्धातुयाशुक्लाभवेत्प्रतिपदाश्विनी नवरात्रव्रतंतस्यांनकार्यंशुभमिच्छता देशभंगोभवेत्तत्रदुर्भि-
क्षंचापजायते नंदायादर्शयुक्तायांयत्रस्यान्मंत्रपूजनं तथादेवीपुराणे नदर्शकलयायुक्ताप्रतिपच्चंडिकार्चने उदयेद्विमुहूर्तापिग्राह्यासोदय
कारिणी यदापूर्वदिनेशुद्धाभूत्वापरदिनेषुच वर्द्धतेचतदाभूत्वासंपूर्णत्वादमांविना यानितुद्वितीयायोगनिषेधपराणिवचनानिश्रुतानि
तानिश्राद्धानिपराण्येव परदिनेप्रतिपदासत्वेतुआमायुक्तापिग्राह्या अमायुक्ताप्रकर्तव्येतिनृसिंहप्रसादोदाहृतवचनान्यपिएतद्विषया
ण्येव अत्रदेवीपूजाप्रधानं अष्टम्यांचनवम्यांचजगन्मातरमंबिका पूजयित्वाश्विनेमासिविशोकोजायतेनरः यतीचब्रह्मचारीचविधवाच
रजस्वला नवरात्रंचोपवासमेकभुक्तमयाचितं चैत्रावैधृतियुक्ताचेत्प्रतिपच्चंडिकार्चने तयोरंतेविधातव्यंकलशस्थापनंध्रुवं प्रतिपद्या-
श्विनेमासिभवेद्वैधृतिचित्रयोः आद्यपादौपरित्यज्यप्रारंभेन्नवरात्रकं चित्रावैधृतिसंयुक्ताप्रतिपत्तुभवेन्नृप वैधृत्यावापियुक्तास्यात्तदा
मध्यंदिनेरवौ त्याज्यांशास्त्रयस्त्वाद्यास्तुरीयांशेतुपूजनं नवरात्रोस्थापनंकार्यंनचकुंभाभिषेचनं भास्करोदयमारभ्ययावत्तुदशनाडिकाःप्रा
तःकालइतिप्रोक्तःस्थापनारोपणादिषु आद्याःषोडशनाडिस्तत्यक्त्वायःकुरुतेनरः कलशस्थापनंतत्रअरिष्टंजायतेध्रुवं वृद्धोसमासिर
ष्टम्यांन्हासेनप्रतिपन्निशिप्रारंभोनवचण्ड्यास्तुनवरात्रमतोर्थवत् तिथिवृद्धौतिथीन्हासेनवरात्रंयथार्थकं घटस्थापनविधिः प्रतिपदिप्रातरभ्यं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गंकृत्वादेशकालौसंकीर्त्यममेहजन्मनिदुर्गाप्रीतिद्वारासर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यविच्छिन्नसंततिवृद्धिस्थिरलक्ष्मी-
कीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थंशारदनवरात्रेप्रतिपदिविहितंकलशस्थापनंदुर्गापूजांकुमारिपूजादिकरिष्ये इतिसंकल्प्य तद
गगणपतिपू॰पुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंत्वग्वरणंचकरिष्ये ततोमहीद्यौरितिभूमिंस्पृष्ट्वा ओषधयः संवदंतेइतियवान्नि-
क्षिप्य आकलशेषिवितिकुंभंसंस्थाप्य इमंमेगंगेइतिजलेनापूर्य गंधद्वारामितिगंधं ओषधयइतिसर्वौषधीः कांडात्कांडादितिदूर्वाः अश्वत्थेव
इतिपंचपल्लवान् स्योनापृथिवीतिसप्तमृदः याःफलिनीरितिफलं सहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिरण्यंक्षिप्त्वा युवासुवा-
साइतिवस्त्रेणसूत्रेणवावेष्ट्य पूर्णादर्वीतिपूर्णपात्रंकलशोपरिनिधाय तत्रवरुणंचसंपूज्यजीर्णायांनूतनायांवाप्रतिमायांदुर्गामावाह्यपूजयेत्
नूतनमूर्तिकरणेग्न्युत्तारणंकुर्यात् अथपूजा आगच्छवरदेदेविदैत्यदर्पनिषूदन पूजांगृहाणसुमुखिनमस्तेशंकरप्रिये सर्वतीर्थमयंवा
रिसर्वदेवसमन्वितं इमंघटंसमागच्छतिष्ठदेविगणैःसह दुर्गादेविसमागच्छसान्निध्यमिहकल्पय बलिंपूजांगृहाणत्वमष्टभिःशक्ति
भिःसह इतिआवाह्य शंखचक्रगदाहस्तेशुभ्रवर्णेशुभासने ममदेविवरंदेहिसर्वैश्वर्यप्रदायिनी सहस्रशीर्षा॰ हिरण्य-
वर्णा॰ इत्यावाहनं नानाप्रभासमाकीर्णंनानावर्णविचित्रितं आसनंकल्पितंदेविप्रीत्यर्थंतवगृह्यतां पुरुषएवेदं॰ तामआ॰ इत्या
सनं गंगादिसर्वतीर्थेभ्यआनीतंतोयमुत्तमं पाद्यंतेहिप्रदास्यामि गृहाणपरमेश्वरि ॥ एतावा॰ अश्वपूर्वा॰ पाद्यं॰ गंधाक्षतैश्च



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

संयुक्तं फलपुष्पयुतं तव अर्घ्यं गृहाण दत्तं मे प्रसीद परमेश्वरि त्रिपादूर्ध्व॰ कांसोस्मितां॰ अर्घ्यं॰ गंगागोदावरी चैव यमुना च सरस्व
ती मया आचमनीयार्थमानीतं तोयमुत्तमं तस्माद्विरा॰ चंद्रांप्र॰ आचमनीयं॰ पंचामृतं मयानीतं पयोदधिसमन्वितं घृतं मधु शर्करया
प्रीत्यर्थं प्रतिगृह्यतां श्रुतिमंत्राः आप्यायस्व॰ १ दधिक्राव्णो॰ २ घृतंमिमि॰ ३ मधुवाताऋ॰ ४ स्वादुःपवस्वेति॰ ५ पंचभिर्मंत्रैः पंचा
मृतस्नानं ज्ञानमूर्ते भद्रकालि दिव्यमूर्ते स्फुरेश्वरि स्नानं गृहाण देवि त्वं नारायणि नमोस्तु ते यत्पुरुषेण॰ आदित्यवर्णे॰ स्नानं॰ सूक्ष्मतंतुवि
निर्मितं नानावर्णविचित्रितं वस्त्रं गृहाण मे देवि प्रीत्यर्थं प्रति॰ तस्माद्यज्ञा॰ क्षुत्पिपासा॰ उत्तरीयं॰ अलंकारान्महादिव्यान्नानारत्नविनिर्मि
तान् गृहाण देव देवि त्वं प्रसीद परमेश्वरि अलंकारान्स॰ मलयाद्रिसमुद्भूतं कर्पूरागरुवासितं मया निवेदितं भक्त्या चंदनं प्रतिगृह्यतां तस्माद्यज्ञा॰
गंधद्वारां॰ गंधं॰ अक्षताश्च सुरश्रेष्ठाः कुंकुमेन समन्विताः मया निवेदिता भक्त्या प्रीत्यर्थं प्रतिगृह्यतां अक्षतान् मंदारपारिजाताश्च पाट
लीकेतकी तथा मारुतं मोगरं चैव शतपत्राणि चंपकं तस्मादश्वा॰ मनसः काम॰ पुष्पाणि॰ अहिरिव भोगैः ऋक् परिमलद्रव्याणि
अथांगपूजा दुर्गायै नमः पादौ पूजयामि महाकाल्यै॰ गुल्फौ पू॰ मंगलायै॰ जानुनी पू॰ कात्यायिन्यै॰ ऊरू पू॰ भद्रकाल्यै॰ कटी पू॰ कम
लायै॰ नाभिं पू॰ शिवायै॰ उदरं पू॰ क्षमायै॰ हृदयं पू॰ स्कंदायै॰ कंठं पू॰ महिषासुरमर्दिन्यै॰ नेत्रे पू॰ उमायै॰ शिरः पू॰ विंध्यवासिन्यै॰
सर्वांगं पू॰ दशांगं गुग्गुलं धूपं चंदनागरुसंयुतं मया निवेदितं भक्त्या गृहाण परमेश्वरि यत्पुरुषं यद॰ कर्दमेन प्रजाभू॰ धूपं आज्यं च वर्तिसंयु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्तंवन्हिनायोजितंमया दीपंगृहाणदेवित्वंप्रीत्यर्थंप्रतिगृह्यतां ब्राम्हणोस्य॰ आपःस्रजंतु॰दीपं॰ अन्नंचतुर्विधंस्वादुरसैः षड्भिः समन्वि
तं भक्ष्यभोज्यसमायुक्तंप्रीत्यर्थंप्रतिगृह्यतां चंद्रमा॰ आर्द्रांपुष्क॰ नैवेद्यं आचमनीयं॰ मलयाचलसंभूतंकस्तूर्याचसमन्वितं करोद्वर्तन
कंदेविगृहाणपरमेश्वरि करोद्वर्तनं॰ इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि नाभ्याआ॰ आर्द्रांयःक
रि॰ फलं पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं हिरण्यगर्भेतिदक्षिणां यज्ञेनयज्ञ॰ यःशुचिः
प्र॰ मंत्रपुष्पांजलिं॰ अश्वदायेगोदाये॰ इत्यादिप्रार्थयेत् ॐश्रियेजातः॰ नीराजनं श्रीसूक्तंसंपूर्णपठित्वापुष्पांजलिः मंत्रहीनंक्रियाहीनंभक्तिही
नंसुरेश्वरि यत्पूजितंमयादेविपरिपूर्णंतदस्तुमे महिषघ्नि महामाये चामुंडेमुंडमालिनी यशोदेहिधनंदेही सर्वान्कामांश्चदेहिमे नमस्कारः न
तोक्तत्विग्वरणं अथकुमारीपूजा एकवर्षातुयाकन्यापूजार्थंतांविवर्जयेत् गंधपुष्पफलादीनांप्रीतिस्तस्यानविद्यते मंत्राक्षरमयींलक्ष्मीमातृणां
रूपधारिणीं नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहं द्विवर्षकन्यामारभ्यदशवर्षांतविग्रहां पूजयेत्सर्वकार्येषुयथाविध्युक्तमार्गतः कुमारिका
द्विवर्षातुत्रिवर्षातुत्रिमूर्तिका चतुर्वर्षातुकल्याणीपंचवर्षातुरोहिणी षष्ठवर्षातुकालीस्यात्सप्तवर्षातुचंडिका अष्टवर्षाशांभवीचदुर्गाचनवमेस्मृ
ता दशवर्षासुभद्रेतिनामतःपरिपूजयेत् प्रातःकालेविशेषेणकृत्वाभ्यंगंसमाहितः आवाहयेत्ततःकन्यांमंत्रैरेभिःपृथक्पृथक् जगत्पूज्येजगद्वंद्येस
र्वशक्तिस्वरूपिणी पूजांगृहाणकौमारीजगन्मातर्नमोस्तुते प्रतिपदमारभ्यदशमीपर्यंतंकन्यापूजयेत् प्रतिपदिकन्यापूजामंत्रः त्रिपुरांत्रिगु-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

णांकारात्रिमार्गज्ञानरूपिणी त्रैलोक्यवंदितांदेवींत्रिमूर्तिंपूजयाम्यहं द्वितीयायां कलात्मिकांकलातीतांकारुण्यहृदयांशिवां कल्याणजन-
नींनित्यांकल्याणींपूजयाम्यहं तृतीयायां अणिमादिगुणाधारामकाराद्यक्षरात्मिकां अनंतशक्तिभेदांतांरोहिणींपूजयाम्यहं चतुर्थ्यां
कामचारींकामरात्रिंकालचक्रस्वरूपिणी कामदांकरुणाधारांकालिकांपूजयाम्यहं पंचम्यांउग्रध्यानाचोग्ररूपांदुष्टक्रूरनिबर्हिणी चा
र्वंगींचंडिकांलोकेपूजितांपूजयाम्यहं षष्ठ्यां सदानंदकरींशांतांसर्वदेवनमस्कृतां सर्वभूतात्मिकांलक्ष्मींशांभवींपूजयाम्यहं सप्त-
म्यां दुर्गमेदुस्तरेयुद्धेभयदुःखविनाशिनीं पूजयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीं अष्टम्यां सुंदरींस्वर्णवर्णाभांसर्वसौभा
ग्यदायिनीं सुभद्रजननींदेवींसुभद्रांपूजयाम्यहं नवम्यां इतिकुमारीपूजनं अष्टरात्रेनदोषायं नवरात्रेतिथिक्षये सूतके
पूजनंप्रोक्तंजपदानंविशेषतः देवीमुद्दिश्यकर्तव्यं तत्रदोषोनविद्यते रजस्वलांतथाशौचेब्राह्मणेश्चसुपूजयेत् गंधालंकारतां
बूलपुष्पमालानुलेपनैः उपवासंनदुष्यंतिदंतधावनमंजनं इतिआश्विनशुक्लप्रतिपत्कृत्यं अथकार्तिकशुक्लप्रतिपत्सापू
र्वाग्राह्या पूर्वविद्धाप्रकर्तव्याशिवरात्रिर्बलेर्दिनं वत्सरादौवसंतादौबलिराज्येतथैवच तैलाभ्यंगमकुर्वाणोनरकंप्रतिपद्यते भो
नर्गोवर्धनःपूज्योद्यूतंवापिसमाचरेत् पूजनीयास्तथागावस्त्याज्यंदोषनमंजसा अथकथा वालखिल्याऊचुः प्रतिपद्युदयेभ्यंगंकृत्वा-
नीराजनंततःसुवेषःसत्कथागीतैर्दानैश्चदिवसंनयेत् शंकरस्तुतदाद्यूतंससर्जसुमनोहरं कार्तिकेशुक्लपक्षेतुप्रथमेहनिसत्यवत् प्रत्युवाच

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वचश्चेदं देवीं प्रति सदाशिवः कालक्षेपाय केषांचित् केषांचिद्धनहेतवे केषांचिद्धननाशाय पश्य द्यूतं कृतं मया तस्य त्वं कौतुकं पश्य भुव
नं लापयाम्यहं उद्येत्थं क्रीडितं ताभ्यां भवान्या च जितं तदा पुनर्द्वितीयं भुवनं लापितं निर्जितं त्वया पुनस्तृतीयं भुवनं लापितं निर्जितं तया पुनर्वृ
षं पुनश्चर्म पुनः पन्नगबंधनं शशिलेखां डमरुकं सर्वं तस्याप्यजीजयत् निर्गतस्तु गृहाद् गेहाच्चीरवल्कलधारकः गंगातीरं समागत्य तस्थौ चिंतासम
न्विता तस्मिन् क्षणे कार्तिकेयः खेलितुं च गतः क्वचित् गंगातीराद्ययौ गेहं मध्यस्थं पश्यति शंकरं ईषत्क्रुद्धं विरक्तं च ननाम चरणौ पितुः तेनापि मूर्ध्नि चा
घ्रातः पुत्र याहि गृहं स्कंद तव मात्रा जितश्चाहं गच्छामि गहनं वनं स्कंद उवाच कथं मात्रा जितो देवो वनं कस्माच्च गच्छसि अहमप्यागमिष्यामि त्वत्पादौ सेवया
म्यहं शिव उवाच विजित्य तव मात्रा तु क्षणं न स्थेयमत्र वै मम लोके तथेत्युक्त्वा क्वचिद्गच्छाम्यहं ततः स्कंद उवाच मा गच्छ त्वं महादेव द्यूतमार्गं प्रदर्शय आ
नीयते मया जित्वा सर्वं तव धनादिकं शिवेनापि तथेत्युक्त्वा द्यूतमार्गं प्रदर्शितः स्कंदोपि गृहमागत्य पार्वतीं वाक्यमब्रवीत् स्कंद उवाच देवि देवो गतः
क्वासौ वृषभो नैव संस्थितः शीर्षं च न विधुः कस्मान्मातः सत्यं वदाद्य मे देव्युवाच स्वयमेव कृतं द्यूतं स्वयमेव पराजितः स्वयमेव गतः क्रोधात्स्त्राध्य
तां स कथं मया स्कंद उवाच मया सह क्रीडितव्यं कथं तत्क्रीडनं त्विति देव्यक्रीडत्तेन सार्धं ततः स्कंदेन निर्जितं मयूरेपादृषस्तस्याः शक्त्या
पन्नगबंधनं वृषेनेंदुस्तनोर्धांगं तत्सर्वं तेन निर्जितं कौपीनं निर्जितं च मे गृहीत्वा तदुपाययौ गंगातीरे यत्र शिवस्तत्रागत्य
न्यवेदयत् ततो देवीसमीपे तु विघ्नराजः समाययौ किमर्थं म्लानवदना देवि जानासि तद्वद देव्युवाच मया जितो महादेवः स तु गेहाद्विनिः





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

र्गतः आयास्यतिद्दृषाद्यर्थमितिसंचिंत्यसंस्थितं तवभ्राभ्रातुतज्जित्वासर्वंतस्मैनिवेदितं नायास्यत्यधुनादेवइतिचिंतापरास्म्यहं गणेश उवाच देविशिक्षयमांद्यूतंजेष्याभिभ्रातरंहरं आनयिष्यामिसामग्रीययद्यहंस्याकृतस्तव इतिपुत्रवचःश्रुत्वातस्मैद्यूतमशिक्षयत् संगृहीत्वा पाशयुगंसारिकाःशीघ्रमाययौ पृष्ट्वा पृष्ट्वायत्रदेवःस्कंदोयत्रव्यवस्थितः गणेशउवाच मयानीताविमौपाशौसारिकाःपटएवच क्री डत्वंतुमयासार्धंदेवस्याग्रेममाग्रज इतिभ्रातृवचःश्रुत्वात्युभाभ्यांक्रीडितंतदा मूषकेणबलीवर्दंमयूरंचाप्यजीजयत् शिवस्यसर्ववि षयंस्कंदस्यचतथैवच गृहीत्वासतुविघ्नेशस्तत्कालेपार्वतीययौ पार्वत्यपिचसंतुष्टागणेशंवाक्यमब्रवीत् सम्यक्कृतंत्वयापुत्रनानी तोसौमहेश्वरः सामदानादिकंकृत्वाआनयात्रमहेश्वरं तथेत्युक्त्वागणेशोसौसमारुह्यचमूषकं त्वरितंचाययौतत्रगृहेनेतुंमहेश्वरं ईश्वर स्तुसमुत्थायहरिद्वारंसमागतः नारदेरितवृत्तांतोविष्णुस्तत्रसमागतः विष्णुरुवाच व्यक्षोविद्यांकुरुशिव एकाक्षोहंभवाम्यहं एक श्चासावक्षःपाशकइतिविग्रहेपिपरिनिष्ठितरूपत्वात्काणोभवेतिशब्दच्छलं रावणेनतथेत्युक्तेकाणोभवजनार्दन विष्णुरुवाच ओंतुवत्सश्चसेमांत्वंतस्मादोतुर्भविष्यसि नारदउवाच देवसिद्धंमहत्कार्यमायातिसगणेश्वरः ज्ञात्तुमत्रभवेदृत्तंसमूषकस्तस्य धर्षतां इतिश्रुत्वानारदस्यवचनंरावणोग्रतः कुर्वन्मार्जारवच्छब्दंमूषकोसौपलायितः मूषकंत्यज्यगणपःशनैःशनैरुपाय यौ जातोविष्णुःपाशाइतिदूरतस्तद्विलोकितं प्रणिपत्यमहादेवंविनयानतकंधरः गणेशउवाच आगम्यतांदेवगेहंदेवीमा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नपुरःसरं यदिनायासिगेहंत्वं प्राणांस्त्यक्ष्यतिचांबिका त्वय्यागतेमयासर्वंकार्यमेतदुपायनं महादेवउवाच एषाद्यक्षामयावि
द्याऽधुनागणपनिर्मिता अनयाक्रीडनेदेवीआमामिष्येगृहंतदा गणेशउवाच सर्वथैवक्रीडितव्यंदेव्यानास्त्यत्रसंशयः आगम्य
तांगृहंदेवप्राणान्नासहहिमाव्रज इतितस्यवचःश्रुत्वाईश्वरःसगणोययौ नारदोपिगतस्तत्रमहोत्सुरपिचागतः उपविष्टास्तुकैलासे
देवास्तत्रसमागताः हस्त्वादेवींप्रहस्यादौमहेशोवाक्यमब्रवीत् द्यक्षविद्यामहादेवीगंगाद्वारेविनिर्मिता अनयाजयसेत्वंचतदा
त्वंसत्यभाषिणी देव्युवाच वृषादिनवसामग्रीमयेयंलापिताशिव त्वयाकिलाप्यतेब्रूहिदर्शयस्वसदोगतां इतिश्रुत्वावचस्त
स्याःप्रेक्षताधोमुखंहरः तस्मिन्क्षणेनारदेनस्वकोपीनंसमर्पितं वीणादंडश्चोपवीतमनेनाप्रियतामिति सदाशिवःप्रसन्नोभू
त्क्रीडनंसमचक्रतुः यद्यद्याचयतेरुद्रस्तथाविष्णुःप्रजायते यद्यद्याचयतेदेवीविपरीतःपतत्यसौ स्वकीयाभरणाद्यंचमहादेवेननि
र्जितं स्कंदालंकारितंसर्वंपुनरासंहरेणच ततोगणेशःप्रोवाचवाक्यंसदसिगर्वितः नक्रीडितव्यंहेमातःयाशोलक्ष्मीपतिःस्वयं कृतो
हरेणासर्वस्वंतेहरिष्यतिमत्पिता इतिपुत्रवचःश्रुत्वापार्वतीक्रोधमूर्छिता तथाविधायमालोक्यरावणोवाक्यमब्रवीत् रावणउवा०
पापिष्ठेनाद्यशप्तोस्मिदुर्दुरूहेनविष्णुना अधर्मोयंनकर्तव्यइत्युक्तंतेमयायतः देव्युवाच सर्वान्शापिष्येवत्सोहंधूर्तानेतान्महाबलान्
सामर्थ्यंपश्यमेपुत्रधर्मत्यागफलंतथा देवयस्मादबलयाकपर्दंचक्रेतत्वया तस्मात्तदास्तुतेमूर्धागंगाभारप्रपीडितः इतस्ततःकुचेष्टांत्वंप्र-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तः शिक्षयसे मुने स्वप्नेपि ते सुखं स्त्रीणां न कदापि भविष्यति यत्कृतात्त्वबलया सह मायात्वयाहरे एष वैरी रावणोयं तव भार्यां नयिष्य
ति एष वैरी भविता यः अयं पुनस्तव भार्यां नयिष्यति संबंध इत्यादे तदिदं प्रयोगे दुष्टः हित्वा मां मातरं पुत्र बालकत्वं त्वया कृतं अतस्त्वं न
सुखावृद्धो बाल एव भविष्यसि गणेश उवाच अनेन चोतुरूपेण मूषकोयं पलायितः मध्ये मार्गकृतं विघ्नं शपेनं राक्षसाधमं देव्युवाच यस्मादि
दं त्वया दुष्टकृतं मद्बालकस्य तु तस्मादयं तव रिपुर्विष्णुस्त्वां घानयिष्यति इति देव्या वचः श्रुत्वा सर्वे संक्षुब्धमानसाः देवीशापे मनश्चक्रुर्नारदो
वाक्यमब्रवीत् नारद उवाच कोपं कुर्वंतु मा देवा नेयं शप्या कदाचन सर्वेषामादिमायेयं यथा योग्य फलप्रदा नायं शाप इयं देवी स्मर्तव्या तु
विचक्षणैः गंगा सदा तिष्ठतु रुद्रमस्तके बलाद्रमां वानयतु क्षपाचरः जयाहरस्याथ यथोचिता मूर्तिश्चानंग तृष्णा रहितः कुमारः अहंभ्रमामि
धरणीं न स्थास्यंत पोधनैः सम्यग्देवि त्वया प्रोक्तं शृण्विदानीं वचो मम सर्वक्रोधापनुत्यर्थं नर्नर्त मुनिपुंगवः कक्षानादं चकारोच्चैर्हीहा
हीहीति चाब्रवीत् तस्य चेष्टां विलोक्याथ सर्वे हर्षमवाप्नुयुः देव्युवाच भोभो विदूषकश्रेष्ठ कृतकृत्योसि नारद विदूषकविनोदकृत्
वरं वरय भद्रं ते यद्यन्मनसि रोचते नारद उ० याचयं तु वरं सर्वे कोवा किं याचयिष्यति सर्वे ते याचयिष्यंति यथाश्रेष्ठं ब्रुवंतु तत् शिव उ०
सर्वं संक्षम्यतां देवि जितं यद्वृषभादिकं तन्मया तु द्यूतशतैर्न ग्राह्यं जगदंबिके देव्युवाच मास्तु त्वयासमं नाथ स्वप्नेपि मम चांतरं एत
देव वरं मन्ये क्रोधो मा भून्ममोपरि कार्तिकेय कृपक्षे तु प्रेथमे हनिसत्यवत् जयो लब्धो मयात्वत्तः सत्येनैव महेश्वर तस्माद्द्यूतं प्रकर्तव्यं प्रभा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तेतच्चमानेवैः तस्मिन्द्यूतेजयोयस्यतस्यसंवत्सरंजयः विष्णुरुवाच अहंयंयंकरिष्यामिश्रेष्ठंवालघुमेववा तथातथाभवतुनद्दरमेनंव
दाम्यहं स्कंदउ॰ सदामनस्तपस्यायांममातिष्ठतुदेवता: कदापिविषयेमास्तुदेयएषवरोमम गणेशउ॰ संसारेयानिकार्याणितदादौममपू
जनंयांतुसिद्धिंममकृपांविनासिध्यंतुमाकचित् रावणउवाच वेदव्याख्यानसामर्थ्यंममशीघ्रंभवत्विति सदाशिवेसदाचास्तुभक्तिर्मेव्य
भिचारिणी नारदउवाच क्रुद्धाक्रुद्धाश्चयेकेचिन्मूर्खामूर्खाश्चयेजनाः मद्वाक्यंसत्यमित्येवमानयंतुसदास्फुराः इत्युक्त्वांतर्हिताःसर्वेदेवा
रुद्रपुरोगमाः तस्मात्प्रतिपदिद्यूतंकुर्यात्सर्वोपिवैजनाः द्यूतंनिषिद्धंसर्वत्रहित्वाप्रतिपदंबुधाः स्वस्योद्यमादिज्ञानायकुर्यात् द्यूतमतंद्रितः
विशेषवच्चभोक्तव्यंसुहृद्भिर्ब्राह्मणैःसह पक्वान्नादिविशेषमित्यर्थः योषिताभिश्चसहितंनेयासाचभवेन्निशा ततःसंपूजयेन्मानेरंतःपु
रस्रुवासिनीः पदातिजनसंघातान्ग्रैवेयैःकटकैःशुभैः स्वनामांकैःस्वयंराजातोषयेत्स्वजनान्पृथक् वृषभान्माहिषांश्चैवयुध्यमानान्
परैःसह गजानश्वांश्चयोधांश्चपदातीन्समलंकृतान् मंचारूढःस्वयंपश्येन्नटनर्तकचारणान् युधापतेश्चासयेच्चगोमहिष्यादिकंतथा त
तोपराह्णसमयेपूर्वस्यांदिशिकाश्यप मार्गपालीप्रबध्नीयात्तुंगेभेप्यपिपादपे पालींकुशमयींदिव्यांलंबकैर्बहुभिर्नयेत् दर्शयित्वागजान-
श्वान्सायमश्वाकृतेनयेत् कृतहोमैर्द्विजेंद्रैश्चबध्नीयान्मार्गपालिकां मार्गपालिनमस्तेस्तुसर्वलोकसुखप्रदे विधेयैःपुत्रदाराद्यैःपुनरेहि
व्रतस्यमे नीराजनंचतत्रैवकार्यंराष्ट्रजयप्रदं मार्गपालींसमुल्लिख्यनीडजास्तुसुखान्विताः तस्मात्तत्प्रकुर्वीतद्यूताद्यंविधिपूर्वकं इति



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सनत्कुमारसंहितायांपूजाविधिः तत्रैववालखिल्याऊचुः पूर्वविद्धाप्रकर्तव्याप्रतिपद्बलिपूजने वर्धमानतिथिन दा[illegible]सार्धत्रयात्मिका
द्वितीयावर्धमा मिताद्युत्तरातत्रवोच्यते बलिमालिख्यदेत्येंद्रं वर्णकैःपंचरंगकैः गृहमध्यमशालायांविंध्यावल्यासहासितं जिह्वाचार्वक्षि
णीप्रांतेकरयोः पादयोस्तले रक्तवर्णेनास्यकेशाः कृष्णेनवसमालिखेत् सर्वांगंपीतवर्णेनशस्त्राद्यंनीलवर्णकैः वस्त्रंचश्वेतवर्णेनय
थाशोभंप्रकल्पयेत् सर्वाभरणशोभाढ्यंद्विभुजंनृपचिन्हयुक् लोकोलिखेद्गृहस्यांतः शय्यायांशुक्लतंडुलैः मंत्रेणानेनसंपूज्यषोडशैरुप
चारकैः बलिराजनमस्तुभ्यंदैत्यदानवपूजित इंद्रप्रभोमरारातेविष्णुसान्निध्यदोभव बलिमुद्दिश्यदीयंतेदानानिमुनिपुंगवाः यान्यहान्यक्ष
याण्याहुर्मयैतत्संप्रदर्शितं यैरात्रिर्दृश्यतेबलेयस्माद्दीयतेस्यांयुधिष्ठिर पार्थिवेंद्रैर्मुनिवरास्तेनेयंकौमुदीस्मृता यौयादृशेनभावेनतिष्ठत्यस्यांयु
धिष्ठिर हर्षदैन्यादिरूपेणतस्यवर्षंप्रयातिवै बलिपूजांविधायैवपश्चाद्गोक्रीडनंचरेत् गवांक्रीडादिनेयत्ररात्रौदृश्येतचंद्रमाः सोमोराजापं
शून्हंतिसुरभिःपूजकांस्तथा प्रतिपद्दर्शसंयोगेक्रीडनंचगवांमतं परविद्धेषुयःकुर्यात्पुत्रदारधनक्षयः अलंकार्यास्तदागावोग्रासाद्यैश्चसुर
र्चिताः गीतवादित्रनिर्घोषैर्नयेन्नगरबाह्यतः आनीयचगृहंपश्चात्कुर्यान्नीराजनाविधिं अभ्यंचेत्प्रतिपत्स्वल्पानारीनीराजनंचरेत् द्वितीया
यांतदाकुर्यात्सायंमंगलमालिकां एवंनीराजनंकृत्वासर्वपापैःप्रमुच्यते प्रतिपत्पूर्वविद्धैवदृष्टिकाकर्षणेभवेत् कुशकाशमयींकुर्याद्दृष्टिकां
सुनवोद्दृढां देवद्वारेनृपद्वारेचत्वारेचचतुष्पथे तामेकतोराजपुत्राहीनवर्णास्तथैकतः गृहीत्वाकर्षयेयुस्तांयथाचारंमुहुर्मुहुः समारव्याद

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ग्र॰रा॰
३४

योः कार्यासर्वेपिबलवत्तराः जयोत्रहीनजातीनांजयोराज्ञस्तुवत्सरं उभयोःपृष्ठतःकार्यारिखास्वार्ककरोपरि रेखांतेयोनरस्तस्यजं
योभवतिनान्यथा जयचिन्हमिदंराजाविदधीतप्रयत्नतः सनत्कुमारसंहितायां वालखिल्याऊचुः कार्तिकस्यसितेपक्षेअन्नकूटं
समाचरेत् गोवर्धनोत्सवंचैवश्रीविष्णुःप्रीयतामिति ऋषयऊचुः कोसौगोवर्धनोनामकस्मात्तंपरिपूजयेत् तस्मात्तदुत्सवःका
र्यः कृतेकिंचफलंभवेत् वालखिल्याऊचुः एकदाभगवान्कृष्णोगतोगोपालकैःसह गृहीत्वागाःप्रतिपदिकार्तिकस्यसितेवने त
त्रनानाविधालोकागोप्यश्चापिसहस्रशः गोवर्धनसमीपेतुकुर्वंत्युत्सवमादरात् खाद्यंलेह्यंचचोष्यंचपेयंनानाविधंकृतं कृता
गास्तथानानानृत्यंतिचपुरेजनाः नानापताकाःसंगृह्यकेचिद्धावंतिचाग्रतः केचिद्गोपाःप्रनृत्यंतिस्तुवंतिचतथापरे ततस्ततोविता
नानितोरणानिसहस्रशः दृष्ट्वेमंकौतुकंकृष्णोवाक्यमेतदुवाचह कृष्णउवाच उत्सवःक्रियतेकस्यदेवताकाचपूज्यते पक्वान्ना
स्वादनार्थायकल्पितोयोत्सवोऽधुना नभक्षयंतियेदेवास्तेभ्योन्नंनैवदीयते ईदृशीभवबुद्धिंगोपालावेधसाकृताः गोपालाऊचुः एवं
मावदकृष्णत्वंशक्रहेतुर्महोत्सवः वार्षिकःक्रियतेस्माभिर्देवेंद्रस्यचतुष्टये इमंपूजयभद्रंतेभविष्यतिनसंशयः यश्चकुर्वीतदेवेंद्रमहोत्सव
मिमंनरः कुर्वंइतिमतिजानातीतिविशेषः इलोपआर्षः नरइतिराज्ञोलक्षणं दुर्भिक्षंचतथावृष्टिर्देशेतस्यनजायते तस्मात्त्वमपिकृष्णात्रकुरू
त्सवमनेकधा कृष्णउवाच अयंगोवर्धनःसाक्षाद्दृष्टिसोभिक्षकारकः मथुरास्थैर्व्रजस्थैश्चपूर्वंचायंप्रपूजितः हित्वेनंपूज्यतेलोके[illegible]द्रःपूज्य

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तेकथं उत्सवंक्रियमाणंच प्रत्यक्षोयंभुनक्तिच करिष्यतिकृपिंसम्यगुपसर्गान्हनिष्यति यदायदासंकटंमेमहृदागत्यजायते तदातदापूजया
मिदृश्यंगोवर्धनंगिरिं श्रवणेगोपावार्ताकुर्वंतिकिंत्विदं तेषामध्येकैश्चिदुक्तं कृष्णोक्तंक्रियतामिति यदाखादतिचान्नंचेन्नगोगोवर्धन
स्तदा तदाकृष्णोक्तमखिलं सत्यमेवभविष्यति सर्वएवतदागोपाविनिश्चित्यनंदजं वचनंप्राहुरित्थंचेन्निश्चयोस्तितदाकुरु सर्वेषामग्रणीर्भूत्वा
गोवर्धनमहोत्सवं ततःकृष्णस्तथेत्युक्त्वाउत्सवेकृतनिश्चयः नानासामग्रिकंचक्रुर्यथोक्तंनंदसूनुना नानावस्त्राणिपात्राणिविस्तृतानिनगा
ग्रतः तत्ररत्नान्नपुंजस्तुयथागोवर्धनोमहान् भक्तंसूपानिशाकाश्चकांजिकंवटकास्तथा रोटकाःपूरिकाद्यन्नलडुकान्मंडकादिकं दुग्धदधिघृतं
क्षौद्रंलेह्यंचोष्यंतथामिषं कथिकाद्यंसर्वमर्पितंतत्रदत्वावचोब्रवीत् कृष्णउवाच मंत्रंपठित्वागोपालानेत्रेसंमीलयंतुच गोवर्धनेनभोक्तु
व्यंसर्वमन्नंनसंशयः कृष्णउवाच गोवर्धनधराधारगोकुलत्राणकारक बहुबाहुकृतच्छायगवांकोटिप्रदोभव लक्ष्मीर्यालोकपालानांधेनु
रूपेणसंस्थिता घृतंवहतियज्ञार्थंममपापंव्यपोहतु पठित्विदंमंत्रयुगंसर्वेमुद्रितलोचनाः कृष्णोगोवर्धनंविश्यसर्वमन्नमभक्षयत् भक्ष
णावसरेकैश्चिज्जनैर्दृष्टोगिरिस्तदा अतीवाभूत्तदाश्चर्यंतच्चेतसिमुनीश्वराः ततोनाडीद्वयात्कृष्णोगोपान्वाक्यमुवाचसः अहोगोवर्धने
नात्रक्षणाद्भुक्तमिदंस्फुटं पश्यंतुसर्वेगोपालाःप्रत्यक्षोयंनसंशयः यद्यस्तिकरवांछावःकुर्वंतस्यमहोत्सवं इतिश्रुत्वावचस्तस्य सर्वेवि
स्मितमानसाः गोवर्धनोत्सवंचक्रुरिंद्राच्छतगुणंततः इंद्रोत्सवंद्रुक्रामःसमागच्छत्तनारदः गोवर्धनोत्सवंदृष्ट्वादेवेंद्रस्यसकाशंययौ ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वेंद्रेणकृतातिथ्योवारंवारंप्रणोदितः नोवाचवचनंकिंचिद्देवेंद्रःप्रत्यभाषत इंद्रउवाच युष्माकंकुशलंविप्रवर्तनेवानवेतिवा मदग्रेकथ्यतां
दुःखंमुनीश्वरहराम्यहं नारदउवाच अस्माकंकिंमुनींद्राणामिंद्रदुःखस्यकारणं परंगोवर्धनःशैलःशक्रोजातोविलोक्यते त्वदुक्तसर्वपूज्य
तेसौगोपालैर्गोकुलेगिरिः अतःपरंयज्ञभागान्गृहिष्यतिसएवहि इंद्रासनंतथेंद्राणींक्रमात्सेवगृहिष्यति यस्यवीर्येणशस्त्रेणचनस्यराज्यंप्र
जायते किमस्माकंमुनींद्राणांयएवेंद्रासनेवसेत् वर्षाद्वामासषट्काद्वाद्रष्टव्योसौसभागतः इत्थमुक्त्वाचदेवेंद्रंप्रययौनारदोभुवि इत्थंनार
दवाक्यंचश्रुत्वाशक्रोभ्यभाषत अहोआवर्तसंवर्तद्रोणनीलकपुष्कराः सर्वेमेघाजलंवृष्ट्यकरकाभिःसमन्विते प्रयांतुगोकुलेशीघ्रमारयंतुच
गोपकान् गोवर्धनंस्फोटयंतुवज्रपातैरनेकशः पातयंतुचगाश्चापिगृहाण्युच्छादयंतुच ततोघनघटाघोषोगोकुलेभून्मुनीश्वराः जातश्चारा
द्धकारोमध्यान्हसमयेतदा कंपितास्तुतदागोपाःकिमकांडमुपस्थितं ववर्षुर्बहुपानीयंकरकाभिस्तदाघनाः गोपाऊचुः हाकृष्णकृष्णहे
कृष्णकिमिदानींविधीयतां मृतास्मसर्वेगोपालाःकुपितोयंहिवासवः कृष्णउवाच निर्माल्यासीणिभोगोपाध्येयोगोवर्धनोगिरिः र
क्षाकर्तासएवास्तिनान्योस्तिजगतीतले इत्युक्त्वोत्पाट्यतंशैलंतत्तलेस्थापितास्तुते ततःप्रोवाचवचनंगोपान्प्रतिबलाग्रजः श्रीकृष्णउ॰
अहोगोवर्धनेनैतत्स्थलंदत्तंव्रजंव्रज अन्यःकोस्तिस्थलंदातुंप्रत्यक्षोयंनगोत्तमः एवंसप्तदिनंतोयंववर्षमुसलधारया नानादेशा
यद्युर्नाशंनगोपाःशरणंययुः गोवर्धनस्यनाम्नैवकृष्णोनित्यंप्रयच्छति पक्वान्नानिचगोपेभ्यस्तत्रतेसुखमावसन् इत्येवंकौतुकं



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दृष्ट्वासत्यलोकंययौमुनिः ब्रह्मन्त्वंकिंप्रसुप्तोसिजायतेसृष्टिनाशनं तस्माच्छीघ्रंगोकुलेचगत्वादृष्टिंनिवारय ब्रह्मोवाच किमर्थंजायतेवृ-
।ष्टिः कथंसृष्टिविनाशनं कश्चिद्दैत्यःसमुत्पन्नःसर्वमाख्याहिमेमुने नारदउवाच नोत्पन्नोदैत्यराट्कश्चित्त्यक्तःशक्रोत्सवोभुवि यादवैरि
तिसंक्रुद्धइंद्रएवप्रवर्षति इतितस्यवचःश्रुत्वाहंसमारुह्यवैविधिः आगतोयत्रशक्रोस्तिक्रोधाद्देवःप्रवर्षति ब्रह्मोवाच कथंव्यवसि
तोबुद्धिरीदृशीतेसुरेश्वर त्रैलोक्यनाथोभगवान्निर्जितव्यःकथंत्वया एकयैवकरांगुल्यापश्यगोवर्धनोधृतः ईर्ष्याकथंतेनसाकंत्वया
शक्राविधीयते इतिब्रह्मवचःश्रुत्वामेघान्संस्तभ्यवासवः प्रणिपत्यचतंकृष्णंशक्रोवचनमब्रवीत् क्षंतव्यामत्कृतिर्विष्णोदासोहंशरणा
गतः यद्रोचतेतन्मदेयमपराधापनुत्तये कृष्णउवाच अज्ञात्वातवसामर्थ्यंगोपालैरर्चितंत्विदं एषांदंडस्तुयोग्योयंसम्यगेवत्वयाकृतः
अहंकनीयान्तेभ्रातातवाज्ञापरिपालकः शरणागतजातीनांरक्षणंतुमयाकृतं यदिप्रसन्नोदेवेशउत्सवोयंप्रदीयतां गोवर्धनायगि
रयेगोकुलंरक्षितंयतः शक्रोपिचतथेत्युक्त्वातत्रैवांतरधीयत गतेशक्रेगिरींद्रंतंसंस्थाप्यहरिरब्रवीत् कृष्णउवाच गोपापश्यंतुमाहात्म्य
मद्भुतंशैलजंतुयत् अद्यारभ्यप्रकर्तव्योमहान्गोवर्धनोत्सवः गोवर्धनेनशैलेननिखिलातुधराधृता एतत्सारमजानद्भिःकथंसंक्रीडिते
पुरा अयपर्वतराजस्तुसर्वभूतममाग्रतः एतत्सेवाप्रभावेनबलंलब्धंमयामहत् प्रतिसंवत्सरंतस्मादन्नकूटंविधीयतां गवांभवति
कल्याणंपुत्रपौत्रादिसंततिः ऐश्वर्यंचसदासौख्यंभवेद्गोवर्धनोत्सवात् कृतंयत्कार्तिकेस्नानंजपहोमार्चनादिकं सर्वंनिष्फलतांयाति-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नोत्कृते पर्वतोत्सवे एवमुक्तास्तु ते गोपाः सत्यं सर्वममन्यत यमुः कृष्णादयः सर्वे नैवमेहनि गोकुले वालखिल्या ऊचुः इत्येतत्सर्व
माख्यातमस्माभिस्तु मुनीश्वराः श्रीकृष्णस्य तु संतुष्ट्यै त्वन्नकूटो विधीयतां नानाप्रकारशाकादि देशकालोचितानि च पक्वान्नानि वि
चित्राणि कुर्याच्छक्त्यनुसारतः सर्वान्नपर्वतं कुर्यात् श्रीकृष्णाय निवेदयेत् गोवर्धनस्वरूपाय मंत्रो कृष्णादिनो पठेत् यत्कृष्णो रूपं
कृत्वेति मंत्रो एवं यः कुरुते मर्त्यो विष्णुलोके महीयते इति श्रीसनत्कुमारसंहितायां प्रतिपत्कृत्यं अथ द्वितीयाव्रतानि कार्तिकशुक्ल
द्वितीयायमद्वितीया साऽपराण्हव्यापिनी ग्राह्या ऊर्जे शुक्लद्वितीयायामपराण्हेर्चयेद्यमं स्नानं कृत्वा भानुजं न्यां यमलोकं न पश्यति
ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः वेष्टितः किन्नरैर्हृष्टैस्तस्मै यच्छति वांछितं इति स्कांदात् दिनद्वयेऽपराण्हव्याप्तौ वा परे वेति
युग्मवाक्यात् प्रथमे श्रावणे मासि तथा भाद्रपदे परा तृतीयाश्वयुजे मासि चतुर्थी कार्तिकी भवेत् श्रावणे कलुषा नाम्नी तथा भाद्रे च निर्मला
आश्विने प्रेतसंचारा कार्तिके याम्यता मतेति चतस्रो द्वितीया उपक्रम्य प्रथमायां किंचित्स्नायश्चिन्न द्वितीयायां सरस्वतीपूजा तृतीयायां
श्राद्धं कर्तव्यं चतुर्थ्यां यमपूजनं कार्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर यमो यमुनया पूर्वं भोजितः स्वगृहेर्चितः अतो यमद्वितीयेयं
त्रिषु लोकेषु विश्रुता अस्यां निजगृहे पार्थ न भोक्तव्यमतो नरैः यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनं दानानि च प्रदेयानि भगिनीभ्यो-
विशेषतः स्वर्णालंकारवस्त्रान्नपूजासत्कारभोजनैः सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः तत्स्थाने न माता पितृव्यभगिनीहस्ता



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्प्रथमायांयुधिष्ठिर मातुलस्यस्वताहस्ताद्वितीयायांयुधिष्ठिर पितुर्मातुःस्वसुश्चैवतृतीयायांतयोःकरात् भोक्तव्यंसहजायाश्चभगिन्याह
स्ततःपरं सर्वासुभगिनीहस्ताद्भोक्तव्यंबलवर्धनं धन्यंयशस्यमायुष्यंधर्मकामार्थसाधकं तस्यांतिथौयमुनयायमराजदेवःसंभोजितो
निजकरात्स्वसृसौहृदेन तस्यांस्वसाकरतलादिहयोभुनक्तिप्राप्नोतिरत्नधनधान्यमनुत्तमंसः इतिहेमाद्रौभविष्योद्वितीयाविधिः
अथकथा वालखिल्याऊचुः कार्तिकस्यासितेपक्षेद्वितीयायमसंज्ञिता तत्रापराण्हेकर्तव्यंसर्वथैवयमार्चनं प्रत्यहंयमुनागत्य
यममत्प्रार्थयेत्पुरा भ्रातर्ममगृहेयाहिभोजनार्थंगणावृतः अद्यश्वोवापरश्वोवाप्रत्यहंवदतेयमः कार्यव्याकुलचित्तत्वादवकाशो
नजायते तदैकदायमुनयाबलात्काराान्निमंत्रितः सगतःकार्तिकेमासिद्वितीयायांमुनीश्वराः नारकीयजनान्मुक्त्वागणैःसहरवेःसु-
तः कृतातिथ्योयमुनयानानापाकाःकृतास्तथा कृताभ्यंगोयमुनयातैलगंधमनोहरैः उद्वर्तनंलापयित्वास्नापितःसूर्यनंदनः त
तोलंकारिकंदत्तंनानावस्त्राणिचंदनं माल्यानिचप्रदत्तानिमंचोपरिउपाविशत् पक्वान्नानिविचित्राणिकृत्वासास्वर्णभाजने यमं
चभोजयामासयमुनाप्रीतमानसा भुक्त्वायमोपिभगिनीमलंकारैःसमर्चयत् नानावस्त्रैस्ततःप्राहवरंवरयभामिनि इतितद्वच-
नंश्रुत्वायमुनावाक्यमब्रवीत् यमुनोवाच प्रतिवर्षंसमागच्छभोजनार्थंममगृहे अद्यसर्वेमोचनीयाःपापिनोनरकाद्यम येचैव
भगिनीहस्तात्करिष्यंतिचभोजनं तेषांसौख्यप्रदोहित्वमेतद्देवद्वणोम्यहं यमउवाच यमुनायांतुयःस्नात्वासंतर्प्यपितृदेवताः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नि·रा·
३७

भुनक्तिभगिनीगेहे भगिनीं पूजयेदपि कदाचिदपि मद्द्वारं न स पश्यति भानुजे वीरेशे शानदिग्भागे यमतीर्थं प्रकीर्तितं तत्रस्नात्वा च विधि
वत्संतर्प्य पितृदेवताः पठेदेतानि नामानि आमध्याह्नं नरो नमः सूर्यस्याभिमुखो मौनी दृढचित्तः स्थिरासनः यमो निहंता पितृधर्मराजो
वैवस्वतो दंडधरश्च कालः भूताधिपो दत्तकृतानुसारी कृतांत एतद्दशभिर्जपंति एतानि च दशशतैः नामदशकेन ततो यमेश्वरं पूज्य भ-
गिनीगृहमाव्रजेत् मंत्रेणानेन च यथा भोजितः पूर्णमादरात् भ्रातस्त्वानुजाताहं भुंक्ष्व भक्ष्यमिदं शुभं प्रीतये यमराजस्य यमुनाया
विशेषतः ततः संतोष्य भगिनीं वस्त्रालंकरणादिभिः स्वप्नेपि यमलोकस्य भविष्यति न दर्शनं नृपैः कारागृहे ये च स्थापिता मम वासरे
अवश्यं ते प्रेषणीया भोजनार्थं स्वसृगृहे विमोक्तव्या मया पापा नरकेभ्योद्य वासरे यद्येवं धिक्करिष्यंति ते दंड्या मम सर्वथा कनीया
भगिनी नास्ति तदा ज्येष्ठागृहं व्रजेत् तदभावे सपत्न्यायाः पैतृव्यास्तदभावतः तदभावे मातृशील्या इति मातृसमशीलायाः मातुर्भगि
न्या वा मातुलस्याथवा तथा सापत्नगोत्रसंबंधैः कल्पयेद्यथाक्रमं सर्वाभावे माननीया भगिनी काचिदेव हि गौनद्याद्यथवा तस्या-
अभावे सति कारयेत् तदभावेप्यरण्यादि कल्पयित्वा सहोदरां अस्यां निजगृहे देवि न भोक्तव्यं कदाचन ये भुंजंति दुराचारा नरके ते पतं-
ति च स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनं दानानि च प्रदेयानि भगिनीभ्यो विशेषतः श्रावणे तु पितृव्यस्य कन्याहस्तेन भोजयेत्
मातुलस्य सुताहस्ताद्भुंजीयाद्भाद्रमासके पितुर्मातुः स्वसुः कन्ये आश्विने तु तयोः करात् पितृष्वस्रेयी मातृष्वस्रेयी च अवश्यं कार्तिके

द्वि·
२
३७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भासि भोक्तव्यं भगिनीकरात् एवमुक्त्वा धर्मराजो यययौ संयमिनीं ततः तस्माद्दृषिवराः सर्वे कार्तिके व्रतकारकाः भुंजंतु भगिनीहस्तात्सत्यं सत्ये
न संशयः यमद्वितीयां यः प्राप्य भगिनीगृहभोजनं न कुर्याद्वर्षजं पुण्यं नश्यतीति रवेः सुतात् यातु भोजयते नारी भ्रातरं युग्मके तिथौ
अर्चयेच्चापि तांबूलैर्न सा वैधव्यमाप्नुयात् भ्रातुरायुःक्षयो नूनं न भवेत्तर्हि कर्हिचित् अपराह्णव्यापिनी सा द्वितीया भ्रातृभोजने अ-
ज्ञानाद्यदि वा मोहान्न भुक्तं भगिनीगृहे प्रवासिना वा भावाद्वा ज्वरितेनाथ बंधिना एतदाख्यानकं श्रुत्वा भोजनस्य फलं लभेत् इ
ति श्रीसनत्कुमारसंहितायां यमद्वितीयाख्यानकं संपूर्णं अत्रैव भ्रातृद्वितीयाविधिस्तिथितत्वे यमं च चित्रगुप्तं च यमदूतांश्च
पूजयेत् अर्घ्यश्चात्र प्रकर्तव्यो यमाय सहजद्वयैः भ्रातृभगिनीभिः सह अर्चनमंत्रस्तु एह्येहि मार्तंडजपादिहस्त यमांतकालो-
कधरामरेश भ्रातृद्वितीयां कृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज पाहि मां किंकरैः सार्धं सू
र्यपुत्र नमोस्तु ते लैंगे यातु भोजयते नारी भ्रातरं युग्मके तिथौ अर्चयेच्चापि तांबूलैर्न सा वैधव्यमाप्नुयात् स्कांदे कार्तिके तु द्वितीयायां
शुक्लायां भ्रातृपूजनं या न कुर्याद्विनश्यंति भ्रातरः सप्तजन्मसु पाद्मे उत्तरखंडे भद्रे भामिनि भो भाम त्वदंघ्रिसरसीरुहं श्रेय
से धनमस्तु भ्यमागतो हं तवालयं मृदुवाक्यं ततः श्रुत्वा सत्वरं क्रियते तदा अथ भ्रातृमतीभ्रातस्त्वया धन्यास्मि मानद भोक्तव्यं तेद्य
मद्गेहे स्वायुषे मम मानद कार्तिके शुक्लपक्षस्य द्वितीयायां सहोदरः यमो यमुनया पूर्वं भोजितः स्वगृहेर्चितः यस्मिन् दिने यमेनात्र ना-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र·रा·
३८

रीवापुरुषोपिवा अपविद्धाकर्मपाशैःस्वेच्छयायेपतंतिहि पापेभ्योविप्रमुख्यास्ते मुक्ताः कर्मनिबंधनात् तेषांमहोत्सवोवृत्तोयम
राष्ट्रेस्करवावहः तस्मादद्धधोत्रमद्गेहे भोजनंकुरुकार्तिके आशिषःप्रतिगृह्याथनमस्कृत्यसमर्चयेत् सर्वाभगिन्यःसंपूज्याज्येष्ठाउभ
यतःस्मृताः वस्त्रादिनानमस्कुर्यान्निजवृत्तानुसारतः भ्रातुरायुष्यवृद्ध्यर्थंभगिनीभिर्यमस्यवै पूजनीयाःप्रयत्नेनप्रतिमाश्चविधान
तः मार्कंडेयोबलिर्व्यासोहनुमांश्चविभीषणः कृपोद्रोणिःपरशुरामोअष्टौतेचिरजीविनः मार्कंडेयमहाभागसप्तकल्पांतजीवितः
चिरंजीवीयथात्वंहितथामेभ्रातरंकुरु इतिभ्रातृद्वितीया अथतृतीयाव्रतानि तत्रचैत्रशुक्लतृतीयायांसौभाग्यशयनव्रतं मात्स्ये
मत्स्यउवाच वसंतमाससमासाद्यतृतीयायांजनप्रिय सौभाग्यायसदास्त्रीभिः कार्यंपुत्रसुखेप्सुभिः शुक्लपक्षस्यपूर्वाण्हेतिलैःस्ना
नंसमाचरेत् तस्मिन्नहनिसादेविकिलविश्वात्मिकासती पाणिग्रहणकेमेरुमारूढावरवर्णिनी तयासहैवदेवेशंतृतीयायांसमर्चयेत्
फलैर्नानाविधैर्धूपैर्दीपैर्नैवेद्यसंयुतैः प्रतिमांपंचगव्येनतथागंगोदकेनच पंचामृतैःस्नापयित्वागौरीशंकरसंयुतां नमोस्तुपाटलायैश्च
पादौदेव्याःशिवस्यतु शिवायेतिचसंकीर्त्यजयायैगुल्फयोस्तथा त्रिगुणायेतिरुद्रस्यभवान्यैजंघयोर्युगं शिवंरुद्रेशिवायेतिशिवायैइ-
तिजानुनी संकीर्त्यहरिकेशायतथोरूवरदेनमः ईशायेतिकटिंरत्यैशंकरायेतिशंकरं कुक्षिद्वयंचकोटव्यैशूलिनःशूलपाणये मंग
लायैनमस्तुभ्यमुदरंचापिपूजयेत् सर्वात्मनेनमोरुद्रईशान्यैचकुचद्वयं शिवेवेदात्मनेतद्वद्रुद्राण्यैकंठमर्चयेत् त्रिपुरघ्नातिविश्वेश-

द्वि·
२

३८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मनंतायकरद्वयं त्रिलोचनायेतिहरंत्वाहुः कालानलप्रिये सौभाग्यभुवनायेतिभूषणादिसमर्चयेत् नमोर्धनारीशहरंप्रतिनांगीतिनासि
कां नमउग्रायलोकेशललितेतिपुनर्भुवौ शर्वायपुरहंतारंवस्रुदेव्येनथालकं नमः श्रीकंठनाशायशिवंकेशास्तथार्चयेत् भीमोग्रसौम्य
रूपिण्येशिरःसर्वात्मनेनमः शिवमभ्यर्च्य विधिवत्सौभाग्याष्टकमित्यतः स्थापयेद्गृत्तनिष्पातंकुसुंभंक्षीरजीरकं तृणराजेक्षु
लवणंकुस्तुंबुरुमथाष्टमं दत्तंसौभाग्यकृद्यस्मात्सौभाग्याष्टकमित्यतः एवंनिवेद्यतत्सर्वंभद्रंतशिवयोःपुरः चैत्रेशृंगोदकंप्रा
श्यस्वपेद्भूमावरिंदम पुनःप्रभातेचतथाकृतस्नानजपःशुचिः संपूज्यद्विजदांपत्यंमाल्यवस्त्रविभूषणैः सौभाग्याष्टकसंयुक्तं-
सुवर्णप्रतिमाद्वयं प्रीयतामत्रललिताब्राह्मणायानिवेदयेत् एवंसंवत्सरंयावत्तृतीयायांसदामुने प्राशनेदानमंत्रेच्चविशेषंहिनि
बोधमे गोशृंगोदकमाद्येस्याद्वैशाखेगोमयंपुनः ज्येष्ठेमंदारकुसुमंबिल्वपत्रंशुचौस्मृतं माघेकृष्णतिलास्तद्वत्संचगव्यंचफा
ल्गुने ललिताविजयाभद्राभवानीकुमुदाशिवा वासुदेवीतथागौरीमंगलाकमलासती उमाचदानकालेतुप्रीयतामितिकीर्तनात्
मल्लिकाशोककमलकुसुमोत्पलमालती कुब्जकंकरवीरंचबाणमम्लानकुंकुमं बाणज्ञोलकुरंटः सिंदुवारंचसर्वेषुमासेषुक्रम-
शःस्मृतं जपाकुसुमकौसुंभमालतीशतपत्रिका यथालाभप्रशस्तानिकरवीरंचसर्वदा एवंसंवत्सरंयावदुपोष्यविधिवन्नरः
स्त्रीवाभक्त्याकुमारीवाशिवामभ्यर्च्यशक्तितः व्रतांतेवायनंदद्यात्सर्वोपस्करसंयुतं उमामहेश्वरंहेमंवृषभंचगवासह स्थाप

यित्वान्वशयनेब्राह्मणायनिवेदयेत् अन्यान्यपिययाशक्त्यामिथुनान्यंबरादिभिः धान्यालंकारगोदानैरभ्यर्च्यधनसंचयैः वित्तशा
ठ्येनरहितः पूजयेद्गतविस्मयः एवंकरोतियासम्यक्सौभाग्यशयनव्रतं सर्वान्कामानवाप्नोतिपदमानंत्यमश्नुते फलकस्यचसर्वांगं-
गमेतत्कुर्वन्समाचरेत् यत्रकीर्तिसमाप्नोतिप्रतिमासंनराधिप सौभाग्यारोग्यरूपायुर्वस्त्रालंकारभूषणैः नवियुक्ताभवेद्राजन्नब्दा
नांचशतत्रयं यस्तुद्वादशवर्षाणिसौभाग्यशयन व्रतं करोतिसप्तवाऽपीवाश्रीकंठभवनेमरैः पूज्यमानोवसेत्सम्यक् यावत्कल्पायुत
त्रयं नारीवाकुरुतेभक्त्याकुमारीवानरेश्वर सापितत्फलमाप्नोतिदेव्यानुग्रहलालिता इतिमत्स्यपुराणेसौभाग्यशयनव्रतं अत्रैवगौ
र्यादोलोत्सवः तदुक्तंहेमाद्रौ देवीपुराणे चैत्रशुक्ल तृतीयायांगौरीमीश्वरसंयुतां संपूज्यदोलोत्सवकंकुर्यान्नारीशुभेप्सुका तथाच
निर्णयामृते तृतीयायांयजेद्देवींशंकरेणसमन्वितां कुंकुमागरुकर्पूरमणिवस्त्रैरगाहितां सुगंधिपुष्पधूपैश्चदमनेनविशेषतः आं
दोलदोलयेद्वत्सशिवोमातुष्टयेसदा रात्रौजागरणंकुर्यात्प्रातर्दद्यात्तुदक्षिणा सौभाग्यायसदास्त्रीभिः कार्यापुत्रसुखेप्सुभिः
इयंचपराग्राह्या मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपर इतिमाधवोक्तेः इयंचमन्वादि कृतंश्राद्धविधानेनमन्वादिषुयुगादिषु
हायनानिद्विसाहस्रंपितॄणांतृप्तिदंभवेत् अधिमासेपिइदंकर्तव्यं अत्रपिंडदानंनास्ति अथचैत्रशुक्लतृतीयायांमनोरथतृ-
तीयाव्रतं ईश्वरउवाच साधुकृतंत्वयादेवकृतवत्यापरिग्रहं अस्येहधर्मपीठस्यमनोरथकृतःसती तत्रविश्वभोक्तारोविश्व



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मान्यास्तएवहि येत्वांविश्वभुजामत्रपूजयिष्यंतिमानवाः विश्वेविश्वभुजेविश्वस्थित्युत्पत्तिलयप्रदे नरास्त्वदर्चकाश्चात्रभविष्यंत्य
मलात्मकाः मनोरथतृतीयायांयस्तेभक्तिंविधास्यति तन्मनोरथसंसिद्धिर्भवित्रीमदनुग्रहात् नारीवापुरुषोवापित्वद्व्रताचरणा-
त्प्रिये मनोरथानिहप्राप्यज्ञानमंतेचलभ्यते देव्युवाच मनोरथतृतीयायांव्रतंकीदृक्कथानकं किंफलंकिंकृतंनाथकथयैतत्कृपांकुरु
ईश्वरउवाच शृणुदेवियथापृष्टंभवत्याभवतारणं मनोरथव्रतंचैतद्गुह्याद्गुह्यतरंपरं पुलोमतनयापूर्वंततापपरमंतपः कंचिन्मनोरथं
माधुंन्वापतपसःफलं अपूजयत्तदोमांसभक्त्यागौरीमहेश्वरं गीतेनसरहस्येनकलकंठरवेनहि तद्गानेनातिसंतुष्टोमृदुनामधुरेणच
स्फुतालेनस्वरगेणधातुमात्रकलावता प्रोवाचचवरंब्रूहिप्रसन्नोस्मिपुलोमजे अनेनचस्कगीतेनत्वनयालिंगपूजया पुलोमजोवाच
यदिप्रसन्नोदेवेशतदायोमेमनोरथः तंपूरयमहादेवमहादेव्याःप्रियंवद सर्वदेवेषुयोमान्यःसर्वदेवेषुसुंदरः यायज्वकेषुसर्वेषुयःश्रे-
ष्ठःसोस्तुमेपतिः यथाभिलषितंरूपंयथाभिलषितंसुखं यथाभिलषितंचायुःप्रसन्नोदेहिमेभव यदायदावपत्यामेसंगत्यास्याच्च
स्वेच्छया तदातदाचतंदेहंत्यक्त्वान्यंदेहमाप्नुयाम् सदाचदेवपूजायांममभक्तिरनुत्तमा ममपूजाभगवतीजरामरणहारिणी
भर्तुर्व्ययेतिवैधव्यंक्षणमात्रमपीहन ममभाविमहादेवपातिव्रत्यंचयातुमां ईश्वरउवाच पुलोमकन्येयच्चैषत्वयाकारि
मनोरथः लप्स्यसेव्रतचर्यांतत्कुरुष्वजितेंद्रिया मनोरथतृतीयायाऽचरणेनभविष्यति तत्प्राप्तयेव्रतंवक्ष्येतद्विधेहियथोदितं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तेनव्रतेनचीर्णेनमहासौभाग्यदेनतु अवश्यंभाविताबालेतवचैवमनोरथः पुलोमकन्योवाच कारुण्यवारिधेशंभोप्रणतार्तिं
हरप्रिय किंनामचाथकाभक्तिःकापूज्यात्रदेवता कदाचसाविधातव्याइतिकर्तव्यताचका इत्याकर्ण्यशिवोवाक्यंतातुप्रीत्याज
गादह ईश्वरउवाच मनोरथतृतीयाख्यंव्रतंपौलोमितच्छृणु पूज्याविश्वभुजागौरीचतुर्भुजविशालिनी वरदोभयहस्तश्चसाक्ष
सूत्रःसमोदकः देव्याःपुरस्ताद्भक्तिनापूज्यआशाविनायकः चतुर्भुज श्चारुनेत्रःसर्वसिद्धिकरःप्रभुः चैत्रशुक्लतृतीयायांकृत्वा
वैदंतधावनं सायंतनींचनिर्वर्त्यनानितृप्त्याभुजिक्रियां नियमंचेतिगृह्णीयाज्जितक्रोधोजितेंद्रियः संत्यक्त्वास्पृश्यसंसारंशुचिस्त
द्गतमानसः मातव्रतंचरिष्यामिमातर्विश्वभुजेनघे विधेहितत्रसान्निध्यंमन्मनोरथसिद्धये नियमंचेतिसंगृह्यस्वपेद्रात्रौशुभंस्मर
न् मातरुत्थायमेधावीविधायावश्यकंविधिं शौचमाचमनंकृत्वादंतकाष्ठंसमाहरेत् अशोकवृक्षस्यशुभंसर्वशोकविनाशनं नि
त्यंतनंचसंपाद्यविधिंविधिविदांवरः स्नात्वाशुक्लांबरःसायंगौरीपूजांसमाचरेत् आदौविनायकंपूज्यघृतपूपान्निवेदयेत् ततोर्चयेद्वि
श्वभुजामशोककुसुमैःशुभैः अशोकवर्तिनैवेद्यंधूपैश्चागरुसंभवैः कुसुमैनानुलिप्याद्यौएकभुक्तंततश्चरेत् अशोकवर्तिसहि
तैर्घृतपूरैर्मनोहरैः एवंचैत्रतृतीयायांव्यतीतायांपुलोमजे चैत्रादिफाल्गुनांतासु तृतीयासुव्रतंचरेत् क्रमेणदंतकाष्ठानिकथया
मिनवानघे अनुलेपनवस्तूनिकुसुमानितथैवच नैवेद्यादिगजास्यस्यदेव्याश्चापिशुभव्रते अन्नानिचैकभक्तस्यशृणुतानिफला-





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सये जंब्वपामार्गखदिरजार्नीचूतकदंबकाः प्लक्षोदुंबरखर्जुरीबदरीदाडिमीतथा दंतकाष्ठद्रुमाएतेभ्रतिनःसमुदाहृताः सिंदूरा-
गरुकस्तूरींनंदनंरक्तचंदनं गौ शेचनंदेवदारुपद्माक्षंचनिशाद्वयं प्रीत्यानुलेपनंबालेयक्षमकर्दमसंभवं सर्वेषामप्यलाभेचप्रेश
स्तोयक्षकर्दमः कस्तूरिकायाद्वौभागौद्वौभागौकुंकुमस्यच चंदनस्यत्रयोभागाःशशिनस्त्वेकएवहि यक्षकर्दमइत्येषसमस्त
स्रवल्लभः अनुलिप्याथकुसुमैरर्चयेद्दूर्वाचितान्यपि पाटलीमल्लिकापद्मकेतकीकरवीरकैः उत्पलैराजचंपैश्चनद्यावर्तैश्चराज-
भिः कुमारीभिःकर्णिकारैरलाभेतच्छदैसह स्रगंधीभिःप्रसूनाद्यैःसर्वालाभेपिपूजयेत् करंभोदधिभक्तंचसक्तूत्तरसमंडकः
फेणिकावटकाश्चैवपायसंचसशर्करं समुद्गसघृतंभक्तंकार्तिकेविनिवेदयेत् उदेरिकाश्चलड्डुकामाघेलंपसिकाशुभा सुष्टि-
काःशर्करागर्भाःसर्पिषापरिसाधिताः निवेद्यफाल्गुनेदेव्यैसार्धंविघ्नजितामुदा निवेदयेद्य द्दन्नंहिएकभक्तेपितत्स्मृतं अनिवे
द्येनसंभूदोभुंजानोन्यपतेदधः प्रतिमासंतृतीयायामेकमाराध्यवत्सरं व्रतसंपूर्तयेकुर्यात्स्थंडिलेग्निसमर्चनं जातवेदसमंत्रेणति
लाज्यद्रविणेनच शतमष्टाधिकंहोमंकारयेद्विधिनाव्रती सदैवनक्तेपूजोक्ता तदानक्तेतुभोजनं नक्तएवहिहोमोयंनक्तएवक्षमा
पनं गृहाणपूजांमेभक्त्यामातर्विघ्नजितासह नमोस्तुतेविश्वभुजेपूरयाशुमनोरथं नमोविघ्नकृतेतुभ्यंनमआशाविनायक
त्वंविश्वभुजयासार्धंममदेहिमनोरथं एवंमंत्रौसमुच्चार्यपूज्यौगौरीविनायकौ व्रतक्षमापनेदेव्याःपर्यंकस्तूलिकान्वितः आ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चार्यंचसपत्नीकंपर्यंकेउपवेश्यच व्रतीसमन्वीयेद्वस्त्रैः करकर्णविभूषणैः दद्यात्पयस्विनींगांच व्रतस्यपरिपूर्तये मनोरथतृतीया योव्रतमेतन्मयाकृतं न्यूनातिरिक्तंसंपूर्णमेतद्स्तुभवद्गिरा इत्याचार्यैःसमागच्छेत्तथेत्युक्तश्चतेनवै प्रात श्चतुर्थ्यांसंपूज्यचतुरश्च कुमारकान् एवंसंपूर्णतांयातिव्रतमेतत्स्कानिर्मलं चिंतितंलभतेकामंव्रतस्यास्यनिषेवणात् इतिश्रीस्कंदपुराणेचैत्रशुक्लतृतीया यांमनोरथव्रतोद्यापनंसंपूर्णं अथचैत्रशुक्लप्रतिपदमारभ्यत्रिरात्रपूर्वकंतृतीयायांअरुंधतीव्रते तत्रस्त्रीणामेवाधिकारः अवै धव्यादिफलश्रवणात् तत्रादौसंकल्पः ममइहजन्मांतरेवा बालवैधव्यनाशनार्थं अनेकसौभाग्यपुत्ररूपसंपत्तिसमृद्ध्यर्थंअरुंध तीव्रतमहंकरिष्ये निर्विघ्नतासिद्ध्यर्थंगणपतिपू० स्वस्तिवाचनंआचार्यवरणंचकरिष्ये पश्चात्पूजादिआचार्येणकारयेत् वैशाखे श्रावणेमासिमाघेवाकार्तिकेतथा प्रतिपत्प्रातरुत्थायस्नात्वाशुक्लतिलामलकैः प्रतिपदिदिनेनक्तंद्वितीयायामयाचितं तृतीया यामुपोष्यंचआचार्येणततःसह रात्रौअधिवासनं सुवर्णनिर्मितांदिव्यांद्विभुजांप्रतिमात्रयं अरुंधतींवसिष्ठंचध्रुवंचैवपृथङ्न्यसे त् शिलोपरिसर्वतोभद्रस्थापनं कलशंधातुमयं तदुपरिताम्रपात्रंप्रतिमायांअभ्युत्तारणंकृत्वा तदुपरिअरुंधतींवसिष्ठंध्रुवंचस्थाप येत् कुंकुमाक्षतैःपूजयेत् अथअरुंधतीपूजा अष्टकर्णिकयायुक्तेमंडलेपूजयेत्तुतां अरुंधतींमहादेवीं वसिष्ठसहितांसतीं आ वाहनं अरुंधतिमहादेवीसर्वसौभाग्यदायिनि दिव्यंसुचारुदेवेशंचआसनंप्रतिगृह्यतां आसनं सुचारुसीतलंदिव्यंनानागंधसुवा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सितं पाद्यंगृह्णाणदेवेशिअरुंधतिनमोस्तुते पाद्यं अरुंधतिमहाभागेवसिष्ठप्रियवादिनि अर्घ्यंगृहाण कल्याणिभर्त्रासहपतिव्र
ते अर्घ्यं गंगातोयंसमानीतंसुवर्णकलशेस्थितं आचम्यतांमहाभागेवसिष्ठसहितेनघे आचमनीयं गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः
स्नापितासिमयादेवितथाशांतिंकुरुष्वमे स्नानं नानारंगसमुद्भूतंदिव्यंचारुमनोहरं वस्त्रंगृहाणदेवेशिअरुंधतिनमोस्तुते वस्त्रं कंचुकी
मुपवस्त्रंचनानारत्नैः समन्वितं गृहाणत्वंमयादत्तंअरुंधतिनमोस्तुते उपवस्त्रं कर्पूरकुंकुमैर्युक्तंहरिद्रादिसमन्वितं कस्तूरिकासमायुक्तं
चंदनंप्रतिगृह्यतां चंदनं हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितं मयानिवेदितंभक्त्यागृह्णाणपरमेश्वरी सौभाग्यद्रव्यं माल्यादिनिस्रगं॰
पुष्पं वनस्पतिरसोद्भूतो॰ धूपं आज्यंचवर्तिसंयुक्तं॰ दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं नैवेद्यंगृह्यतांदेवीप्रसीद-
परमेश्वरि नैवेद्यं पूगीफलमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं॰ इदंफलंमयादेविस्था
पितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि फलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसो अनंतपुण्यफलदमतःशां
तिंप्रयच्छमे दक्षिणां पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते प्रार्थनां अरुंधतिमहाभागे
वसिष्ठप्रियवादिनि सौभाग्यंदेहिमेदेविधनपुत्रांश्चसर्वदा उत्तरार्घ्यं द्विभुजांचारुसर्वांगींसाक्षसूत्रकमंडलुं प्रतिमां-
कांचनींकृत्वानामभिःपरिपूजयेत् ॐ देववंद्यायैनमःपादौपू॰ लोकवंद्यायै॰ जानुनिपूज॰ संपत्तिदायिन्यै॰ कटीपू॰ गं-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नाथोजितंमया गृहाणमंगलंदीपंविघ्नराजनमोस्तुते नीराजनं॰ यानिकानिचपापानि॰ नाभ्याआसीतिप्रदक्षिणाः नमोस्त्वनंताय॰ स-
ह्रास्येतिनमस्कारः यज्ञेनयज्ञमितिमंत्रपुंष्पांजलिं एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः मोदकान्कारयेद्देवमेकविंशतिसंख्यया तेषां
मध्येप्रदातव्यादशसंख्याश्चपार्वति देवाग्रेस्थापयेत्पंचपंचविप्रायकल्पयेत् पूजयित्वातुतंविप्रंभक्तिभावेनदेववत् दक्षिणांचय-
थाशक्त्यादत्वावैपंचमोदकान् पूजयेन्निशिचंद्रंचअर्घ्यंदत्वायथाविधि क्षीरसागरसंभूतसुधारूपनिशाकर गृहाणार्घ्यंमयादत्तंगणे
शप्रीतिवर्धन रोहिणीसहितचंद्रमसेनमः इदमर्घ्यं॰ क्षीरोदार्णवसंभूतसुधारूपनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्यासहितः शशिन्
रोहिणीसहितचंद्राय॰ इदमर्घ्यं॰ गणेशायनमस्तुभ्यंसर्वसिद्धिप्रदायक संकष्टंहरमेदेवगृहाणार्घ्यंनमोस्तुते कृष्णपक्षेचतुर्थ्यांतुपूजितो
सिविधूदये क्षिप्रंप्रसादितोदेवगृहाणार्घ्यंनमोस्तुते संकष्टहरगणेशाय॰ इदमर्घ्यं॰ तिथीनामुत्तमेदेवि गणेशप्रियवल्लभे सर्वसंकष्टना
शायचतुर्थ्यर्घ्यंनमोस्तुते वायनमंत्रः विप्रवर्यनमस्तुभ्यंमोदकान्वैददाम्यहं मोदकान्सफलान्पंचदक्षिणाभिःसमन्वितान् आपदुद्ध
रणार्थायगृहाणद्विजसत्तम प्रार्थना अबुद्धमतिरिक्तंवाद्रव्यहीनंमयाकृतं तत्सर्वंपूर्णतांयातुविप्ररूपगणेश्वर ब्राह्मणान्भोजयेद्दे
वंयथातथ्यंयथासुखं स्वयंभुंजीतमौनेनमोदकान्ब्राह्मणैःसह अशक्तश्चैकमन्नंचभुंजीतदधिसंयुतं अथवाभोजनंकार्यमेकवा
रंहिमाद्रिजे प्रतिमांगुरवेदद्यादाचार्यायसदक्षिणां वस्त्रकुंभसमायुक्तामादौमंत्रमिमंजपेत् ॐनमोहेरंबमदमोदितसंकष्टान्निवारय

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निवारय इतिमूलमंत्रं एकविंशतिवारंजपेत् विसर्जनमंत्रः गच्छगच्छसुरश्रेष्ठस्वस्थानेत्वंगणेश्वर व्रतेनानेनदेवेशयथोक्तफलदोभव इ-
तिपूजा अथकथा ऋषयऊचुः दारिद्र्यशोककष्टाद्यैःपीडितानांचवैरिभिः राजश्रेष्ठैर्नृपैःसर्वैःक्रियतेकिंशुभार्थिभिः धनहीनैर्नरैःस्कंदस
र्वोपद्रवपीडितैः विद्यापुत्रगृहभ्रष्टैर्योगयुक्तैःशुभार्थिभिः कर्तव्यंकिंवदोपायंपुनःक्षेमार्थसिद्धये स्कंदउवाच शृणुध्वंमुनयःसर्वव्रता
नामुत्तमंव्रतं संकष्टतरणंनामसंपत्तिसुखदायकं येनोपायेनसंकष्टंतरंतिभुविदेहिनः यद्व्रतंदेवकीपुत्रःकृष्णोधर्मायदत्तवान् अरण्ये
क्लिश्यमानायपुनःक्षेमायसिद्धये यथाकथितवान्पूर्वंगणेशोमातरंप्रति तथाकथितवान्श्रीशोद्वापरेपांडवान्प्रति ऋषयऊचुः
यथाकथितवानंबांपार्वतींश्रीगणेश्वरः तथापृच्छंतिमुनयोलोकानुग्रहकांक्षिणः स्कंदउवाच पुराकृतयुगेपुण्येहिमाचलसुतास-
ती तपस्तस्तवतीभूरितेनालब्धःशिवःपतिः तदास्मरत्साहेरंबंगणेशंपूर्वजंसुतं तत्क्षणादागतंदृष्ट्वागणेशंपरिपृच्छति पार्वत्युवाच
तपस्तप्तंमयाघोरंदुश्चरंलोमहर्षणं नप्राप्तःसमयाकांतोगिरीशोममवल्लभः संकष्टतरणंदिव्यंव्रतंनारदउक्तवान् त्वदीयंयद्व्रतं-
तावत्कथयस्वपुरातनं तच्छ्रुत्वापार्वतीवाक्यंसंकष्टतरणाव्रतं प्रीत्याकथितवान्देवोगणेशोज्ञानसिद्धिदः गणेशउवाच श्रावणेबहु-
लेपक्षेचतुर्थ्यांतुविधूदये गणेशंपूजयित्वातुचंद्रायार्घ्यंप्रदापयेत् पार्वत्युवाच क्रियतेकेनविधिनाकिंकार्यंकिंचपूजनं उद्यापनंकदा
कार्यंमंत्राःकेसुतपूजने किंध्यानंश्रीगणेशस्य गणेशवदविस्तरात् गणेशउवाच चतुर्थ्यांप्रातरुत्थायदंतधावनपूर्वकं ग्राह्यंव्रतमिदंपु



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

र्थं संकष्टतरणं शुभे कर्तव्यमिति संकल्प्य व्रतेऽस्मिन् गणपं स्मरेत् स्वीकारमंत्रः निराहारोऽस्मि देवेश यावच्चंद्रोदयो भवेत् भोक्ष्यामि पूजयित्वा
हं संकष्टात्तार यस्व मां एवं संकल्प्य रात्रौ च स्नात्वा कृष्णतिलैः शुभैः आन्हिकं तु विधायैव पश्चात्पूज्यो गणाधिपः त्रिभिर्माषैस्तदर्धेन तृतीयां-
शेन वा पुनः यथाशक्त्यानुवा हेमी प्रतिमा क्रियते मम माषमात्रात्तदर्धस्य तृतीयांशेन वा पुनः यथाशक्त्यानुवा हेमी ताम्रस्यापि यथासुरवं
सर्वथैव दरिद्रेण क्रियते मृन्मयी शुभा वित्तशाठ्यं न कर्तव्यं कृते कार्यं विनश्यति जलपूर्णं वस्त्रयुतं कुंभं तस्याग्रतो न्यसेत् पद्ममष्टदलैः का
र्यं गंधपुष्पैः प्रपूजयेत् एवं व्रतं प्रकर्तव्यं चतुर्थ्यां श्रावणोऽसिते स्वीकार्यश्च तथाचार्यः संकष्टहरणे तिथौ गणाधीशं तथाचार्यं सर्वशास्त्रवि शा
रद श्रद्धया प्रार्थयेदादौ तेनोक्तविधिमाचरेत् एकविंशतिविप्रांश्च वस्त्रालंकारभूषणैः पूजयेद्व्रीहिरण्याद्यैर्हुत्वाग्नौ विधिपूर्वकं होमद्रव्यं मो
दकाश्च तिलयुक्ता घृतप्लुताः अष्टोत्तरसहस्रं वा नीवारं दोत्तरं शतं अष्टाविंशतिसंख्याकैर्मोदकैर्वा सशर्करैः अशक्तोऽष्टौ शुभान् स्थूलान्जु
हुयाज्जातवेदसि वैदिकेन च मंत्रेण आगमोक्तेन वा तथा अथवा नाममंत्रेण होमं कुर्याद्यथाविधि पुष्पमंडपिका कार्या गणेशाल्हादको-
रिणी पूजयेत्तत्र गणपं भक्तसंकष्टनाशनं गीतवादित्रनिनदैर्भक्तिभावपुरस्कृतैः पुराणवेदनिर्घोषैस्तोषयेच्च गणेश्वरं एवं जाग
रणं कार्यं शक्त्या दानादिकं तथा सपत्नीकमथाचार्यं तोषयेद्वस्त्रभूषणैः उपानच्छत्रगोदानं कमंडलुजलादिभिः यथाशक्त्या प्र
कर्तव्यं दारिद्र्याभावमिच्छता एकविंशतिविप्रांश्च भोजयेन्नामभिर्मम गजास्यो विघ्नराजश्च लंबोदरः शिवात्मजो वक्रतुंडः शूर्पक-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

र्णःकुंभश्चैवविनायकः विघ्ननाशोहिविकटोवामनःसर्वदैवतु सर्वार्त्तिनाशीभगवान्विघ्नहर्त्ताचधूम्रकः सर्वदेवाधिदेवश्चसर्वेषोड
शवैस्मृताः एकदंतःशूर्पकर्णोभालचंद्रोगणेश्वरः गणपश्चैकविंशाश्चसर्वेएतेगणेश्वराः दुर्गोपेंद्रश्चरुद्रश्चकुलदेव्याधिकंभवेत् वि
शेषेणाष्टसंख्याकैर्मोदकैर्हवनंस्मृतं एवंकृतविधानेनप्रसन्नोहंनसंशयः ददामिवांछितान्कामांस्तद्व्रतंमत्प्रियंकुरु श्रीकृष्णउ॰
एवंतुकथितंसर्वगणेशेनस्वयंनृप पार्वत्यातत्कृतंराजन्व्रतंसंकष्टनाशनं व्रतेनानेनसार्धाब्देप्रापशंभुपतिंस्वकं तत्कुरुष्वमहा-
राजव्रतंसंकष्टनाशनं चतुर्थीसंकटानामस्कंदेनकथितामृषीन् ऋषिभिर्लोककामैस्तैर्लोकेतुतदिदंव्रतं सूतउवाच कृतंयुधि
रेणैतद्राज्यकामेनवैद्विज तेनशत्रून्निहत्याजौस्वराज्यंप्राप्तवान्स्वयं तस्मात्सर्वप्रयत्नेनव्रतंकार्यंविचक्षणैः येनधर्मार्थकामाश्चमो-
क्षश्चापिभवेत्किल यःकरोतिव्रतंविप्राःसर्वकामार्थसिद्धिदं सवांछितफलंप्राप्यपश्चाद्गणपतिंव्रजेत् यदायदाव्रतंविप्रानरःप्राप्नो
तिसंकटं तदातदाप्रकर्तव्यंव्रतंसंकष्टनाशनं त्रिपुरंहंतुकामेनकृतंदेवेनशूलिना त्रैलोक्यभूतिकामेनमहेंद्रेणतथाकृतं रावणेनकृ
तंपूर्वंबलिबंधनसंकटे स्वकीयंप्राप्तवान्राज्यंगणेशस्यप्रसादतः सीतान्वेषणकामेनकृतंवायुसुतेनच संकल्प्यदृष्टवान्सी
यंसीतारामप्रियांपुरा दमयंत्याकृतंपूर्वंनलान्वेषणकारणात् सापतिंनैषधंलेभेपुण्यश्लोकंद्विजोत्तमाः अहल्यापिपतिंलेभेगौ
तमंप्राणवल्लभं विद्यार्थीलभतेविद्यांधनार्थीधनमाप्नुयात् पुत्रार्थीपुत्रमाप्नोतिरोगीरोगात्प्रमुच्यते इतिश्रीस्कंदपुराणेसंकष्ट

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चतुर्थीव्रतोद्यापनंसंपूर्णं अथश्रावणेकार्तिकेवाशुक्लचतुर्थ्यांदूर्वागणपतिव्रतं मदनरत्ने सौरपुराणे स्कंदउवाच केनव्रतेनभ
गवन्सौभाग्यमतुलंभवेत् पुत्रपौत्रधनैश्वर्यैर्मनुजःसुखमेधते तन्मेवदमहादेवव्रतानामुत्तमंव्रतं महादेवउवाच अस्तिदूर्वागण
पतेर्व्रतंत्रैलोक्यविश्रुतं भगवत्यापुराचीर्णंपार्वत्याश्रद्धयासह सरस्वत्याचइंद्रेणविष्णुनाधनदेनच अन्यैश्चदेवैर्मुनिभिर्गंधर्वैः
किन्नरैस्तथा चीर्णमेतद्व्रतंसर्वैःपुराकल्पेषडानन चतुर्थीयाभवेच्छुक्लानभोमासस्यपुण्यदा तस्यांव्रतमिदंकुर्यात्कार्तिक्यांवा षडा-
नन कार्तिकेशुक्लपक्षेतुचतुर्थ्यामुत्तमंव्रतं गजाननंचतुर्बाहुमेकदंतविपाठितं विधायहेम्नाविघ्नेशंहेमपीठासनास्थितं तथाहे
ममयींदूर्वांतदाधारेव्यवस्थितां संस्थाप्यविघ्नकर्तारंकलशेताम्रभाजने वेष्टितंरक्तवस्त्रेणसर्वतोभद्रमंडले पूजयेद्रक्तकुसुमैःपत्रि
काभिश्चपंचभिः बिल्वपत्रमपामार्गशमीदूर्वाहरिप्रियाः गंधपुष्पैश्चधूपैश्चकुसुमैश्चसुगंधिभिः फलैश्चमोदकैःपश्चादुपहारंप्रक
ल्पयेत् उपहारस्तुविधिनापूजयेद्गिरिजासुतं उमासुतनमस्तुभ्यंविश्वव्यापिन्सनातन विघ्नौघांछिंधिसकलान्सर्वभाद्यंवदामिते गणे
श्वरायदेवायउमापुत्रायवेधसे पूजयेच्चमहादेवगृहाणभगवन्मम विनायकायशूरायवरदायगजानन उमासुतायदेवायसर्वविघ्नौघ-
हारिणे उमांगमलसंभूतोदानवानांवधायवै अनुग्रहायलोकानांसदेवःपातुविश्वधृक् परंज्योतिःप्रकाशायसर्वसिद्धिप्रदायक
दीपंतुभ्यंप्रदास्यामिमहादेवायतेनमः गणेश्वरगणाध्यक्षगौरीपुत्रगजानन व्रतंसंपूर्णतांयातुत्वत्प्रसादादिभानन एवंसंपूज्य

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्रि॰ रा॰
६१

विघ्नेशंयथाविभवविस्तरैः सोपस्करंगणाध्यक्षमाचार्यायनिवेदयेत् गृहाणभगवन्ब्रह्मन्गणराजंसदक्षिणं व्रतैतद्वचनाद्यपू
र्णतांयातुरुक्‍व्रत दानं श्रावणेशुक्लपक्षस्यचतुर्थ्यांतुजितेंद्रियः कुर्याद्वपूर्भयंत्वेवंसर्वसिद्धिप्रदायकं एवंयःपंचवर्षाणिकृत्वोद्याप
नमाचरेत् ईप्सितान्लभतेकामान्देहांतेशांकरंपदं उद्यापनंविनायस्तुकरोतिव्रतमुत्तमं तेनशुक्लतिलैःकार्यंप्रातःस्नानंषडानन
हेमावाराजतेनापिकृत्वागणपतिंबुधः पंचगव्यैस्तुसंस्नाप्यदूर्वाभिःसंप्रपूजयेत् मंत्रैस्तुदशभिर्भक्त्यादूर्वायुक्तैःशिखिध्वज दूर्वा-
युग्मैःपंचगव्यैःपूजनंदशमंत्रकैः गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथामूषकवाहन विनायकेशपुत्रेतिसर्वसि
द्धिप्रदायक कुमारगुरवेतुभ्यंगणेशायप्रपूजयेत् इत्येवंकथितंसम्यक्सर्वसिद्धिप्रदंशुभं व्रतंदूर्वागणपतेःकिमन्यच्छ्रोतुमिच्छसि
इतिसौरपुराणोक्तंदूर्वागणपतिव्रतोद्यापनं अथैकविंशतिदिनगणपतिपूजनं तत्रश्रावणशुक्लचतुर्थीमारभ्यश्रावणकृष्णादश
मीपर्यंतंगणपतिपूजनं सामध्याह्नव्यापिनीकार्या एकदंतंशूर्पकर्णंगजतुंडंचतुर्भुजं पाशांकुशधरंदेवंमोदकंबिभ्रतंकरे ध्यानं आ
गच्छजगदाधारसुरासुरवरार्चित अनाथनाथ सर्वज्ञगीर्वाणपरिपूजित आवाहनं स्वर्णसिंहासनंदिव्यंनानारत्नसमन्वितं समर्पितं
मयादेवतत्रत्वंसमुपाविश आसनं देवदेवेशसर्वेशसर्वतीर्थहृतंजलं पाद्यंगृहाणगणपगंधपुष्पाक्षतैर्युतं पाद्यं प्रवालमुक्ताफल
पूगरत्नतांबूलजांबूनदमष्टगंधं पुष्पाक्षतैर्युक्तममोघशक्ते दत्तंमयार्घ्यंसफलीकुरुष्व अर्घ्यं गंगादिसर्वतीर्थेभ्यःप्रार्थितंतोयमुत्तमं

व्र॰
४

६१

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कर्पूरैलालवंगैश्चयुक्तमाचम्यतांविभो आचमनं चंपकाशोकबकुलमालतीमोगरादिभिः वासितंस्निग्धताहेतुस्तैलंचारुप्रगृह्यतां अभ्यं
गस्नानं कामधेनुसमुद्भूतंसर्वेषांजीवनंपरं पावनंयज्ञहेतुश्चपयस्नानार्थमर्पितं पयस्नानं पयसस्तुसमुद्भूतंहिमादिद्रव्ययोगतः द
ध्यानीतंमयादेवस्नानार्थंप्रतिगृह्यतां दधिस्नानं नवनीतसमुत्पन्नंसर्वसंतोषकारकं यज्ञांगंदेवताहेतोर्घृतंस्नानार्थमर्पितं घृतस्ना
नं पुष्पसारसमुद्भूतंमक्षिकैराहृतंनयत् सर्वतुष्टिकरंदेवमधुस्नानार्थमर्पितं मधुस्नानं इक्षुरससमुद्भूतांशर्करांस्कमनोहरां म
लापहरणस्नानेगृहाणत्वंमयार्पितां शर्करास्नानं सर्वमाधुर्यताहेतुःस्वादुःसर्वप्रियंकरः पुष्टिकृतूस्नातुमानीतइक्षुसारभवोगुडः
गुडस्नानं कांस्येकांस्येनपिहितंदधीमधुघृतंपयः मधुपर्कोमयानीतःपूजार्थंप्रतिगृह्यतां मधुपर्कस्नानं सर्वतीर्थाहृतंतोयंमयाप्रा
र्थनयाविभो सुवासितंगृहाणेदंसम्यक्स्नानंसुरेश्वर स्नानं रक्तवस्त्रयुगंदेवलोकलज्जानिवारणं अनर्घ्यमतिसूक्ष्मंचगृहाणेदंम
यार्पितं वस्त्रं राजतंब्रह्मसूत्रंचकांचनंरत्नसंयुतं भक्त्योपपादितंदेवगृहाणपरमेश्वर यज्ञोपवीतं अनेकरत्नयुक्तानिभूषणानिब
हूनिच तत्तदंगेकांचनानियोजयामितवाज्ञया भूषणंपूर्वादिक्रमेणअष्टौदिक्पालानावाहयेत् इष्टगंधसमायुक्तंरक्तचंदनमिश्रितं द्वा
दशांगेषुतेदेवलिंपयामिकृपांकुरु चंदनं रक्तचंदनसंमिश्रांस्तंडुलांस्तिलकोपरि शोभार्थंसंप्रदास्यामिगृहाणजगदीश्वर अक्षता० पा
टलंकर्णिकारंचबंधूकंरक्तपंकजं मोगरंमालतीपुष्पंगृह्यतांभुवनेश्वर पुष्पा० नानापंकजपुष्पैश्चग्रथितांपल्लवैरपि बिल्वपत्रयुतांमा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लां गृहाणगरू मनोहरां मालां॰ अथांगपूजा गणेशाय॰ पादौपू॰ गौरीपुत्राय॰ गुल्फौपू॰ विश्वेश्वराय॰ जानुनीपू॰ गजाननाय॰
ऊरूपू॰ लंबोदराय॰ वक्षस्थलं॰ गणनाथाय॰ स्तनौपू॰ द्वैमातुराय॰ कंठंपू॰ वक्रतुंडाय॰ शिरःपू॰ अथैकविंशतिपत्रपूजा गणा
धिपाय॰ भृंगिराजपत्रंस॰ उमापुत्राय॰ बिल्वपत्रंस॰ गजाननाय॰ दूर्वापत्रंस॰ लंबोदराय॰ बदरीपत्रंस॰ हरसूनवे॰ मधुपत्रं॰ गजव
क्त्रायतुलसीपत्रंस॰ गुहाग्रजाय॰ अपामार्गपत्रं॰ एकदंताय॰ बृहतीपत्रं॰ इभवक्त्राय॰ शमीप॰ विकटाय॰ करवीरपत्रं॰ विनायकाय॰
अश्वत्थपत्रं॰ कपिलाय॰ अर्कपत्रं॰ बटवे॰ चंपकपत्रं॰ अभयप्रदाय॰ अर्जुनपत्रं॰ पत्नीहिताय॰ विष्णुक्रांतपत्रं॰ सुराधिपतये॰
देवदारुपत्रं॰ भालचंद्राय॰ अगरुपत्रं॰ हेरंबाय॰ श्वेतदूर्वापत्रं॰ शूर्पकर्णाय॰ जातीपत्रंस॰ सुरनाथाय॰ धत्तूरपत्रं॰ एकदंताय केतकी
पत्रं॰ अथैकविंशतिनामपू गजाननाय॰ विघ्नराजाय॰ लंबोदराय॰ शिवात्मजाय॰ वक्रतुंडाय॰ शूर्पकर्णाय॰ कुब्जाय॰ विनायकाय॰
विघ्ननाशनाय॰ विकटाय॰ वामनाय॰ सर्वार्तिनाशिने॰ भगवतेनमः विघ्नहर्त्रे॰ धूम्रकाय॰ सर्वदेवाधिदेवाय॰ एकदंताय॰ कृष्णपिंगाय॰ भा
लचंद्राय॰ गणेश्वराय॰ गणपाय॰ पुष्पं॰ २१ दशांगगुग्गुलंधूपंसर्वसौगंधिकारकं सर्वपापक्षयकरंगृहाणत्वंमयार्पितं धूपं सर्वज्ञसर्वलो
केशानमोनाशनमुत्तमं गृहाणमंगलंदीपंदेवदेवनमोस्तुते दीपं॰ नानापक्वान्नसंयुक्तंपायसंशर्करान्वितं राजिकाधान्यसंयुक्तंमेथीपिष्टस
तक्रकं हिंगुजीरककूष्मांडेर्मरीचीमाषपिष्टकैः संपादितैःसूपकैश्चभर्जितैर्वटकैर्युतं मोदकापूपलड्डुक शष्कुलीवटकादिभिः पर्पटरससं



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

युक्तंनैवेद्यमघृतान्वितं हरिद्राहिंगुलवणसहितंसूपमुत्तमं सत्तामुद्रंगृहाणेदंभोजनंकुरुसादरं मयानिवेदितंतुभ्यंगृहाणजगदीश्वर नैः
वेद्यं अतितृप्तिकरंतोयंसुगंधिंचपिबेच्छया त्वयितृप्तेजगत्तृप्तंनित्यतृप्तेमहात्मनि मध्येपानीयं० उत्तरापोशनार्थंतेददाम्यतोयंसुवासि-
तं मुखपाणिविशुद्ध्यर्थंपुनस्तोयंददामिते दाडिमंमधुरंनिंबूजंब्वाम्रपनसादिकं द्राक्षारंभंफलंपक्वंकर्कंधूखर्जूरंफलं नारीकेरंचना
रिंगंकलिंगंमांजिरंतथा उर्वारुकंचदेवेशफलान्येतानिगृह्यतां फलानि गृहाणचंदनंचारुकरांगोद्वर्तनंशुभं नानापरिमलैर्द्रव्यैर्निर्मितं
चूर्णमुत्तमं अबीरंनामकंपुण्यंगंधिचारुप्रगृह्यतां चारुचालुरसंभूतंवंशसारसमुद्भवं सचंद्रपूगचूर्णादिखदिरेणाचसंयुतं एलाल
वंगसंमिश्रंतांबूलंप्रतिगृह्यतां तांबूलं न्यूनातिरिक्तपूजायांसंपूर्णफलहेतवे दक्षिणांकांचनींदेवस्थापयामितवाग्रतः दक्षिणां०
सितपीतैस्तथारक्तैर्जलजैःकुसुमैःशुभैः ग्रथितांसुंदरांमालांगृहाणपरमेश्वर मालां हरिताःश्वेतवर्णावापंचत्रिपत्रसंयुताः दू-
र्वांकुरामयादत्ताएकविंशतिसंमिताः गणाधिपाय० दूर्वांकुरान्स० उमापुत्राय० अभयप्रदाय० एकदंताय० मूषकवाहनाय० विना
यकाय० ईशपुत्राय० इभवक्त्राय० सर्वसिद्धिप्रदायकाय० लंबोदराय० विघ्नराजाय० विकटाय० मोदकप्रियाय० विघ्नविध्वंसकर्त्रे०
विश्ववंद्याय० अमरेशाय० गजकर्णकाय० नागयज्ञोपवीतिने० भालचंद्राय० विद्याधिपाय० विद्याप्रदाय० इतिदूर्वा० गणेशंहृदये
ध्यात्वासर्वसंकष्टनाशनं एकविंशतिसंख्याकाःकरोमिचप्रदक्षिणाः प्रदक्षिणां० औदुंबरेराजतेवाकांस्येकांचनसंभवे पात्रेप्रक

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रा॰
६२

ल्पितांदीपान् गृहाणचक्षुरर्पितान् पंचा र्तिं पंचदीपैश्चदीपितांपरमेश्वर चारुचंद्रप्रभंदीपंगृहाणपरमेश्वर पंचार्तिं॰ कर्पूरस्यमयादेव
दीपस्तेचनिवेदितः यथास्यनेक्षतेभस्मतथापापविनाशय कर्पूरदीपं॰ स्तोत्रैर्नानाविधैःसूक्तैःसहस्रनामभिस्ततः उपविश्यस्तुवीतै
नंकृत्वास्थिरतरंमनः दीनानाथदयानिधेसुरगणैःसंसेव्यमानोद्विज ब्रह्मेशानमहेंद्रशेषगिरिजागंधर्वसिद्धैस्तुतः सर्वारिष्टनिवारणे
कनिपुणत्रैलोक्यनाथप्रभोभक्तिंमेसफलांकुरुष्वसकलांक्षांत्वापराधान्मम आवाहनंनजानामिनजानामितवार्चनं विसर्जनंनजाना
मिक्षम्यतांजगदीश्वर क्षमापनं गौरीसुतनमस्तेस्तुसर्वसिद्धिप्रदायक सर्वसंकष्टनाशार्थमर्घ्यंमेप्रतिगृह्यतां अनेनएकविंशतिअ
र्घ्याणि कृतपूजायाःसांगतासिद्ध्यर्थंब्राह्मणायवायनप्रदानंकरिष्ये ब्राह्मणपूजनं दशमोदकसंयुक्तंवाणकंचफलप्रदं गणेशप्र
ीणनार्थायगृहाणत्वंद्विजोत्तम वाणकं सांगतासिद्ध्यैब्राह्मणान्भोजयेत् इत्येकविंशतिदिनगणपतिपूजा अथैकविंशतिदिन
गणपतिकथा शौनकउवाच सूतसूतमहाप्राज्ञव्यासविद्याविशारद संकष्टेचसमुत्पन्नेकार्यसिद्धिःकथंनृणां सूतउवाच शृणुध्वं
मुनयःसर्वेशौनकप्रमुखानघाः संकष्टनाशनंपुण्यंव्रतंवच्मियथाश्रुतं यत्कृत्वासर्वकार्याणिसिद्धियांतिनसंशयः पूजयित्वागणे
शंहिएकविंशद्दिनावधि शौनकउवाच कथंपूज्योगणाध्यक्षोविघ्नहर्तागणाधिपः केनचादौपुराचीर्णंव्रतंविघ्नहरस्यच वदसर्वंम
हाप्राज्ञअस्माकंविधिपूर्वकं प्राप्तोसित्वंमहाभाग्यादरण्येसत्रमंडपे सूतउवाच एवमेवपुरापृष्टःषण्मुखोवदतांवरः नसत्कुमार-

च॰
४

६२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मुनिनाब्रह्मपुत्रेणयोगिना सनत्कुमारउवाच कार्तिकेयमहाप्राज्ञदेवसेनाधिपप्रभो एकदन्तकथंमुच्येज्जनोवैज्ञानदुर्लभः श्रु
त्वावाक्यंब्रह्मसूनोःसर्वेषांकार्यगौरवं सेनानीस्तुतदाहर्षान्नमस्कृत्यमहामुनिं स्कंदउवाच विप्रवर्यमहायोगिन्पार्वत्यामुखतः
श्रुतं वदामितद्व्रतंतुभ्यंश्रृणुसर्वेसमासतः कैलासभवनेरम्येवसमानोमहेश्वरः स्नातुंजगामभगवान्भोगवत्यांयथासुखं तस्मि
न्नेवदिनेअंबात्वभ्यंगस्नानमारभत् स्वशरीरान्मलंगृह्यतस्यमूर्तिमकल्पयत् सजीवंचपुनःकृत्वाएहिपुत्रेत्यचोदयत् अवदद्देनतो-
नामबल्लवस्त्वंविनायकः पुत्रगच्छबहिर्द्वारेतिष्ठतत्रदृढायुधः आयास्यतिकदाचिद्धिपुरुषोभवनांतरे तन्निवारयितुंशक्तोयावत्स्ना
नंकरोम्यहं ममाज्ञांगृह्यपश्चात्त्वंप्रवेष्टुमर्हसिध्रुवं मात्राज्ञागृह्यशिरसिआगमद्वारदेहलीं मुद्गरंतुसमादायहस्तेबल्लवनामकः
अरक्षद्द्वारदेशंसपार्वत्याज्ञांस्मरन्बलात् तदानीमेवआयांतंविभूत्याचर्चितंविभुं संप्राप्तेभवनद्वारेशंभुःसर्वेश्वरोहरः देहलींप्रवि
शन्वारयन्द्वारयन्द्वारपोबली द्वारपालउवाच कोसित्वंचकिमर्थंहिगम्यतेभवनेशुभे मात्राज्ञायातियावत्त्वंस्थातव्यंतावदेवहि स्कं
दउवाच द्वारपालवचःश्रुत्वाशंभुःकोपमथाकरोत् शंभुरुवाच कस्याज्ञाचमयाग्राह्याकोसित्वंभाषसेकथं गृहीत्वाडमरुंहस्तेद्वार-
पालशिरोहनत् प्रविशच्चततस्तूर्णंस्वगृहंपार्वतीपतिः दृष्ट्वानाथंसकोपंसाचिंतयत्पार्वतीहृदि बहुधाबाधतेक्षुद्वैशंकरेकोपकार-
णं अलंकृताचसुस्नातापार्वतीजगदंबिका पायसेनतुपूर्णेद्विभक्ष्यभोज्येनसंयुते संस्थाप्यचैवपीठाग्रेघृतेनसितयान्विते पात्र

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इत्थंसमालोक्यअवदत्पार्वतींशिवः शंभुरुवाच दिव्यकांचनसंभूतंदर्वीभ्यांचसुलोचने भोज्यपात्रंतुकस्येदंस्थापितंचद्वितीयकं भोजना
र्थंद्वितीयोद्यकोयातिवदवल्लभे नायातित्वरयाचात्राविलंबेकारणंवद इतिश्रुत्वावचःशंभोःसर्वेशस्यमहासती प्रीतिहर्षसमायुक्तासर्वज्ञ
भवदत्तदा पार्वत्युवाच ममाद्यस्नानसमयेउद्वर्तनमलोद्भवं पुत्रंविरच्यचद्वारदेहल्यांस्थापितोमया तदर्थंचद्वितीयंवैभाजनंस्थापितंध्रुवं
इतिश्रुत्वावचस्तस्याश्चकंपेप्राकृतोयथा शिवउवाच प्रविशंतंचमांद्वारेतवपुत्रोन्यवारयत् कोसित्वंचमयापृष्टस्तेननोक्तानवाभिधा कोपे
नचततस्तस्यशिरश्छित्वानिपातितं इतिश्रुत्वाततोदेवीविह्वलापतिताभुवि पार्वत्युवाच पुत्रंजीवयमेदेवतर्हिभोक्ष्यमहेश्वर तथैवच
ममप्राणागमिष्यंतिनसंशयः इत्युक्त्वाचततोदेवीहाकष्टमित्यब्रवीवदत् पुनःपपातसाभूमौवातेनकदलीयथा शिवउवाच उत्तिष्ठभद्रेकिंदुः
खंपुत्रार्थंमाकुरुप्रिये अधुनातवपुत्रंहिजीवयामिशिरोविना प्रियामेवंचआश्वास्यगतोद्वारंस्वयंविभुः इतस्ततोवलोक्याथगजोदृष्टोमृ-
तस्तदा निकृत्यचनागशिरोबल्लवंयोजयद्विभुः संजीव्यबल्लवंपुत्रंपार्वतींविनिवेदयत् दृष्ट्वागजशिरंपुत्रंपार्वतीहर्षनिर्भरा भोजयित्वापतिं
पुत्रंस्वर्णपात्रेसुशोभने नमस्कृत्यततोदेवंपतिपात्रेउपाविशत् बुभुजेतुततोदेवीपतिशेषंतुभोजनं कैलासभुवनेरम्येपार्वत्यानिवसन्बहु
अरन्विभुःकदाचित्सवृषभेणबलीयसा पार्वत्यासहितोदेवःप्राप्तवान्नर्मदातटं रम्यंरेवातटंदृष्ट्वापार्वतीत्यवदच्छिवं पार्वत्युवाच
देवदेवमहादेवशंकरप्राणवल्लभ अक्षक्रीडनकामाहंत्वयासार्धंस्मरेश्वर शंकरउवाच अक्षक्रीडनकामात्वमासनेस्मिन्स्थिराभव जयेपरा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जयेचात्रसाक्ष्यर्थंयोजयप्रिये स्वामिवाक्यंचसाश्रुत्वा एरकांगृह्यमुष्टिना नराकृतिमथाकल्प्यप्राणान्सासमयोजयत् देहंतस्यचसास्पृश्य
पाणिपद्मेनसांभसा तमुवाचततोबालमक्षक्रीडांविलोकय आवाभ्यांक्रीड्यमानाभ्यांकोजयीतिवदध्रुवं इतिमातुर्वचःश्रुत्वाबालकोवैत-
थेतिभोः अक्षक्रीडासमारब्धा पार्वत्याशंकरेणच जयोजातश्चपार्वत्याः शंकरस्तुपराजितः शंकरस्तुतदापृच्छत्कोजितोवदबालक अवद
द्बालकस्तत्रजितंदेवेनशूलिना पुनःक्रीडामवृत्तासासाक्षीकृत्वातुबालकं पुनर्जितंतुपार्वत्याशंकरस्तुपराजितः बालंपप्रच्छसादेवीजितंके
नवदाधुना पुनरप्याहबालोसौजितंदेवेनशूलिना हर्षेणचसमायुक्तःपार्वतींप्राहशंकरः क्रीडांकुरुमहादेविरोषंत्यजशुभानने क्रीड
तीसापुनर्देवीजितोदेव्यासशंकरः लज्जितःशंकरोबालंकोजितोवदनिश्चितं शंकरंप्राहबालाख्योजितस्त्वंभुवनाधिप बालवाक्यंसमा-
कर्ण्यपार्वतीकोपनिर्भरा मिथ्यावदसिदुष्टात्मन्यादहीनोत्रकर्दमे पच्यमानोतिदुःखेनभविष्यसिनसंशयः बालउवाच विशापंकुरु
मांमातर्बालभावान्मयेरितं इतिश्रुत्वावचस्तस्यमातृभावाद्दयान्विता पार्वत्युवाच नागकन्यायदाविप्रपूजार्थंचतदैष्यसि गणेशपूज
येत्यार्थादृष्ट्वापूजाविधिंशिवं तासांश्रुत्वावचोदिव्यंतवभक्तिर्भविष्यति गणेशंपूजयित्वातुममसान्निध्यमिच्छसि इत्युक्त्वासातदादेवी
हिमाचलमगाद्रुषा व्यतीतेवत्सरेपूर्णे श्रावणेमासिचागते गणेशपूजनार्थंतानागकन्याःसमागताः दृष्टवान्नर्मदातीरेरुचिरंवृंदंबहुभूषि
तं बालउवाच किमर्थंचागताबालाःकिंचात्रक्रियतेधुना भवतीभिःपूज्यतेकःकिंफलंवदताद्यमे नागकन्याउवाच वत्सपूज्योगणो

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शास्यक्रियतेस्माभिरुत्तमा पूजितेतुजगन्नाथेलभतेवांछितंध्रुवं बालउवाच कथंपूज्योगणाध्यक्षःकियत्कालंवदाद्यभोः कोविधिःकेचसं
भाराःकदापूज्योगणेश्वरः नागकन्याऊ॰ श्रावणेमासिसंप्राप्तेचतुर्थ्यांतुरवगोदये तिलामलककल्केनस्नानंकुर्याज्जलाशये शुक्लपक्षेस
मारभ्ययावत्कृष्णादशमीभवेत् मध्यान्हेपूजयेत्तावदेकविंशद्दिनावधि एकविंशतिदूर्वाभिस्तावत्पुष्पैःशुभैःसदा मोदकैरेकविंशैश्चपूजयेत्प्र
त्यहंजनः मोदकादशविप्रायदातव्याश्चसदक्षिणाः एकंगणाधिपेदत्वास्वयंचाद्यादशैवतु पूजामौनेनकर्तव्याभोजनंचयथानघ ब्रह्मचारी
भूमिशायीश्चूद्रभाषणवर्जितः हविष्याशीतथाभूयाच्छुचिरंतर्बहिःसदा एवंनियममास्थायपूजांकुर्यात्सदाव्रती ताम्रपात्रेजलंगृह्यगंधपु
ष्पसमन्वितं फलरत्नसमायुक्त मर्घ्यंदद्याद्गणाधिपे दक्षिणांतुसदावत्सएकविंशान्निवेदयेत् पूजासमाप्तौविप्रायवायनंचसमर्पयेत् ग
णेशायनमस्तेस्तुपार्वतीनंदनायच गंधपुष्पसमायुक्तंगृहाणार्घ्यंनमोस्तुते गणेशप्रीतयेतुभ्यंवायनंदशमोदकं दक्षिणाफलसंयुक्तंवंशपात्रे
स्कृकल्पितं गणेशःप्रतिगृण्हातिगणेशोवैददातिच गणेशस्तारकोभाभ्यांगणेशायनमोनमः एवंपूज्योगणाध्यक्षोनार्मदोभक्तितःशुभः
गणेशेपूजितेवत्सतवसिद्धिर्भविष्यति एवमुक्त्वागतादेव्योनागकन्याःशुचिस्मिताः बालकेनकृतंपश्चादन्यस्मिन्वत्सरेततः श्रावणेमासिसं
प्राप्तेशुक्लपक्षेतिथौशुभे चतुर्थ्यांकृतसंभारोव्रतंजग्राहबालकः गणेशंनार्मदंतत्रएकविंशद्दिनावधि विधिवत्पूजयामासनमस्कृ
त्यगणेश्वरं गणेशोवरदोजातोयाचयस्वयदीप्सितं श्रुत्वावाक्यंगणेशस्यहर्षनिर्भरमानसः बालउवाच नमस्कृत्यगणेशानंवरदं

ब॰
४

६९

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हिनमोस्तुते पादयोर्मेबलंदेहिवासंशंकरसन्निधौ गणेशउवाच यथेच्छसितथैवास्तु पार्वत्याः प्रीतिरस्तुते इत्युक्त्वातुगणेशोसौतत्रैवांतर्द
धेविभुः दृढपादश्चबालोसौकैलासमगमत्तकः दृष्ट्वाहरस्यचरणौशिरसाजगृहेशुभौ शिवउवाच उत्तिष्ठवत्सतेपादौकथंजातौदृढौवद
कस्यप्रसादात्त्वमिह आगतोसिममालयं बालउवाच कृतंमयागणेशस्यएकविंशद्दिनात्मकं श्रुतंचनागकन्याभ्यस्तद्व्रतंपूजनंमया तेनपु
ण्यप्रभावेनप्राप्तोहंतवसन्निधौ गणेशस्यप्रसादेनशरीरंदृढतांगतं शिवउवाच कीदृशंतद्व्रतंब्रूहिकरिष्येहंचतद्व्रतं वल्लभायादर्शनार्थंपा
र्वत्यारोषशांतये बालउ॰ श्रावणेशुक्लपक्षेतुचतुर्थ्यांचसमारभेत् श्रावणेबहुलेपक्षेदशम्यांचसमापयेत् गणेशंपूजयेन्नित्यमेकविंश
द्दिनावधि एकविंशतिदूर्वाभिःपुष्पैरपितथैवच कर्तव्यामोदकास्तत्र एकविंशतिसंख्यकाः दशविप्रायदत्वातु एकंदेवेनियोजयेत् अ
वशिष्टाः स्वयंभक्ष्याः श्रुतमेवंमयाविभो किंमयाद्यत्वयाज्ञप्तंकर्तव्यंवर्ततेविभो आचरच्छंभुरप्येवंगणेशस्यव्रतंशुभं पूजनात्तुगणे
शस्य पार्वत्याश्चलितंमनः हित्वाचलंनमस्कृत्य वचनंचेदमब्रवीत् पार्वत्युवाच गम्यतेद्य मयातात कैलासंनिजमंदिरं शिव
स्यचगणौद्रष्टुमुत्सुकंमेमनोभवत् शीघ्रंदेहिममाज्ञांभोक्षणंस्थातुंनशक्यते हिमाचलउवाच प्रेषयिष्येक्षणंतिष्ठविमानेना-
र्कवर्चसा सैन्यंददामिरक्षार्थंतवमार्गेशुचिस्मिते पितृवाक्यंसमाकर्ण्यविमानंचारुरोहसा क्षणमात्रेणसायाताकैलासभवनोत्त
मं दृष्ट्वामहेश्वरंदेवंप्रणनामविहस्यच किंकृतंभोनजानीममनोमेचाद्यतत्त्वया वाक्यंश्रुत्वाप्रियायाश्चप्रसन्नःसाचालिलिंग्यतां अ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वदत्कारणंतस्याहरणेमनसोध्रुवं शिवउवाच कृतंमयागणेशस्यपूजनंतववहेतवे तेनपुण्यप्रभावेनआगतात्वंममांतिकं पार्वत्युवाच
कथंपूज्योगणाध्यक्षोवदत्वंजगत्प्रभो अहमद्यकरिष्यामिसेनानीदर्शनायच शंकरउवाच कुरुदेविगणेशस्यपूजनंचयथाविधि
एकविंशतिदूर्वाभिःपुष्पैर्नानाविधैःशुभैः मोदकैरेकविंशैश्च एकविंशद्दिनानिच अर्घ्यैस्तावतिसंख्याकैस्तथाब्राह्मणतर्पणैः त्रिलो
चनमुखाच्छ्रुत्वागणेशःपूजितस्तया एकविंशद्दिनात्पश्चात्कुमारोभ्यगमत्स्वयं स्कंदंदृष्ट्वातदादेव्यास्तनाभ्यांनिर्झरावभुः कृतमालिंग्य
सादेवीचुचुंबचमुखंपुनः वत्साद्यचमुखंदृष्टंगणेशस्यप्रसादतः बहुकालंचमांत्यक्त्वागतःषण्मुखबालक कृतकृत्याद्यजातास्मिदर्शनात्ते
नसंशयः रोषंत्यजमहाबुद्धेशपथंतेवदाम्यहं स्कंदउवाच मातर्वदगणेशस्यपूजनंचयथाश्रुतं विश्वामित्रंचराजानंममामित्रंवदाम्यहं
पार्वत्युवाच वदमित्रंगणेशस्यपूजनंकुरुभक्तितः एकविंशतिदूर्वाभिःपुष्पैरप्येकविंशतिः कर्तव्यामोदकास्तत्र एकविंशतिसं-
ख्यकाः दशविप्रायदातव्याःस्वयंचाद्याद्दशैवतु एकंगणाधिपेदत्वा अर्घ्याण्यर्पितथैवच पूजयस्वगणाध्यक्षमेकविंशद्दिनावधि
इदंव्रतंगणेशस्यभक्तितोयःकरिष्यति तस्यकार्याणिसित्स्यंतिमनसाचिंतितानिच व्रतराजविधिंश्रुत्वासेनानीश्चतथाकरोत् सेना
नीनामग्रणीत्वंसमवाप्यशुभव्रतः कथयामासविप्रायविश्वामित्रेनराधिपे सोपिराजानमस्कृत्यव्रतंतत्त्वयमाचरत् गणेशोव
रदोजातोविश्वामित्रायतत्क्षणात् गणेशउवाच वदराजन्किमिच्छास्तिददामितवयाचितम् विश्वामित्रउवाच देहिदेवप्रसन्नश्चे



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्वामिंवृह्मर्षित्वमस्त्विति भाषेनविप्रर्षित्वेनसर्वंप्राप्तामनोरथाः गणेशउवाच विप्रर्षित्वंचराजेंद्रप्राप्स्यसिब्रह्मपुत्रतः वसिष्ठाद्ब्रा-
ह्मणश्रेष्ठान्मम्वाक्यंनसंशयः एवमुक्त्वागणेशोसौपूजितोभूमिपेनसः पुनरन्यंवरंचादात्पूजकानांहितायवै यदायदाचराजेंद्रसंकटं
चकलौभुवि भविष्यतिजनानांहिकर्तव्यंपूजनंमम स्मरिष्यंतिचमांभक्त्यानमस्कृत्यपुनःपुनः तेषांदुःखानिसर्वाणिनाशयामिनसं
शयः एवंदत्वावरान्सम्यक्तत्रैवांतर्हितोभवत् सनत्कुमारयोगींद्रपार्वत्यामुखपद्मतः श्रुतंमयाचत्रेतायांगणेशस्यव्रतंमहत्
निवेदितंचतत्सर्वंकुरुविप्रतपोनिधे सनत्कुमारउवाच महदाख्यानकंश्रुत्वानृपसोहंतन्नसंशयः एवमुक्त्वागतोयोगीनमस्कृत्यषडान-
नं सनत्कुमारसेनानीसंवादंचयथाश्रुतं व्यासप्रसादाच्छुतवांस्तथातुभ्यंनिवेदितः इदंव्रतंगणेशस्यकरिष्यतिचमानवः तस्यकार्या
णिसर्वाणिसिद्धियास्यंतिसत्वरं किमन्यद्द्विजश्रेष्ठाःश्रोतुकामास्तपोधनाः तत्सर्वंकथयिष्यामिवक्तव्यंयदिवेच्छथ यद्इदंशृणुयाद्भ-
क्त्याआख्यानंचसमाहितः तदीप्सितानिकार्याणिसलभेन्निश्चितंभुवि शौनकाद्योऋषिगणःश्रुत्वासूतवचोद्भुतं पौराणिकंनमस्कृ
त्यविरराभासनेशृभे इतिश्रीभविष्योत्तरपुराणेस्कंदसनत्कुमारसंवादेतृतीयोल्लासेएकविंशतिदिनेगणपतिव्रतकथासंपूर्णा
अन्यच्चश्रावणशुक्लचतुर्थीमारभ्यमाघशुक्लचतुर्थीपर्यंतंदूर्वागणपतिव्रतंस्कांदे तत्रविधिः मासपक्षाद्युल्लिख्यममसमस्तपापप-
क्षयपूर्वकसप्तजन्मराज्यसौभाग्यादिविवृद्धयउमामहेश्वरसायुज्य तासिध्यर्थंषण्मासपर्यंतंगणपतिप्रीत्यर्थंदूर्वाव्रतंकरिष्ये षोडशो

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र·रा·
६७

पत्वारैःपूजयेत् सूतउवाच कैलासशिखरेरम्येसर्वदेवनिषेविते सिद्धसंगसमाकीर्णेगंधर्वगणसेविते देव्यासहमहादेवोदिव्यं-
स्त्र्यक्षैर्विनोदितः जितासित्वंजितेत्याहपार्वतींपरमेश्वरः सापित्वंजितइत्याहसविवादस्तयोरभूत् चित्रनेमिस्तदाद्रष्टामृषावादमभा
षत तदाक्रोधसमाविष्टागौरीशापंददौततः प्रसादिताततस्तेनविशापंकुरुपार्वती पार्वत्युवाच यदासरोवरेरम्येचरिष्यंतिभवान्-
भुवि तदा स्वर्गणिकाःसर्वावीक्ष्यंतित्वांसमागताः तदाभवविशापस्त्वमित्युक्तःसपपातह ततःकतिपयाहोभिःकुष्ठोनंत
सरोवरे कुष्ठोभूत्वावसंस्तत्रददर्शस्त्वविलासिनीः ततस्तुसादरंगत्वापप्रच्छप्रणिपत्यताः क्रियंतेकिंमहाभागाःपूजायां
वांछितंचकिं ततस्ताअब्रुवंस्तस्मैदूर्वाविघ्नेश्वरव्रतं क्रियतेस्माभिरिहचपरत्राभीष्टसिद्धये ततोब्रवीच्चित्रनेमिर्व्रतंमेदातुम
र्हथ येनाहंगिरिजाशापान्मुच्येयंचिरदुःखितः ततस्ताअब्रुवन्सर्वाव्रतमेतदनुत्तमं दूर्वाविघ्नेश्वरोयत्रपूज्यतेसर्वसिद्धिदः शु
क्लपक्षेचतुर्थीयाभानुवारेणसंयुता तस्यांतिथौसमारभ्यषण्मासंव्रतमाचरेत् प्रत्यहंषड्नमस्काराःषट्दूर्वाःषट्प्रद
क्षिणाः शुक्लपक्षेचतुर्थ्यांचप्रत्येकंचैकविंशतिः एकभुक्तंचकर्तव्यंकथांचशृणुयादिमां ध्यायेद्विनायकंदेवंसमाहि
तमनाःसदा तरुणारुणसंकाशंसर्वाभरणभूषितं जटाकलापस्कंभगंकुंकुमेनापराजितं गजाननंप्रसन्नास्यं — सिंदू
रतिलकांकितम् विशालवक्षसंभानुमुक्तामणिविभूषितं चतुर्भुजमुदारांगंकिंकिणीकंकणैर्युतं पाशांकुशधरंदेवंदंतमो

चं·
४
६७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दकधारिणं महोदरंमहानागंबद्धकुक्षिमुदान्वितं रक्तांशुकसंवीतमभिभास्यमपराजितं प्रणतामरसंदोहमौलिमाणि-
क्यरश्मिभिः विराजितांघ्रिकमलंसर्वदेवनमस्कृतं अभीष्टफलदंदेवंसर्वभूतोपकारकं एवंध्यात्वाजपेन्नित्यंविनायकम
तंद्रितः एवंचरित्वाषण्मासान्शुचिःसत्यपरायणः पश्चादंधादिदूर्वाभिरर्चयेत्तंसदापुनः उद्यापनंप्रकर्तव्यंदेशकालानुसा
रतः ततोमगधदेशस्यमानेनयवपिष्टकं दशमानकमादायदशाष्टौवपिसादकान् कृत्वाघृतप्लुतान्सम्यक् षट्देवायषडा
त्मने षट्चविप्रायदातव्याःश्रोत्रियायकुटुंबिने विनायकोगणाध्यक्षोविघ्नेशःश्रीगणाधिपः वरदःषण्मुखश्चैवदूर्वाष
टकैःप्रपूजयेत् षट्दूर्वांश्चतथादद्यान्महापूजांप्रकल्पयेत् एवंकुरुमहेशानप्रीत्यर्थमभिवांछितं तथेत्युक्त्वाचित्रनेमिः-
प्रीणयित्वाविनायकं शापान्मुक्तस्ततःशंभुमभ्यगात्महसन्निव शंकरेणततःपृष्टश्चित्रनेमिस्तथाजगौ व्रतंश्रुत्वाततःशं
भुर्गणेशस्यकुतूहलात् गौरीकोपप्रसादार्थंशिवोपिकृतवानथ शिवेनोक्तंव्रतंचक्रेगणेशस्यप्रसादजं कार्तिकेयोपिसं
प्राप्तःसेनानीत्वंचतन्महत् व्रतंचकारनंदीचकार्तिकेयोक्तमादरात् सोपिराजाप्रसादायपुत्रार्थंचचकारह ततःक्रमेणलोके
स्मिन्प्रचुरीभूतमुत्तमं व्रतंदूर्वागणेशस्यसर्वसिद्धिकरंपरं शोकव्याधिभयोद्वेगबंधव्यसनदुःखतः विमुक्तःपुत्रपौत्रादि
धनधान्यसमावृतः इहलोकेसुखीभूत्वापश्चाच्छिवपुरंव्रजेत् व्रतेनानेनदूर्वाख्यविघ्नेशस्यप्रसादतः यःपठेत्परयाभक्त्या

कथामेतांदिनेदिने शृणुयाद्यापिसन्ततं सर्वसिद्धिमवाप्नुयात् इतिस्कंदपुराणेदूर्वागणपतिव्रतोद्यापनं अथभाद्रपदशुक्लचतुर्थ्यां-
सिद्धिविनायकव्रतं हेमाद्रौ स्कांदे तच्चमध्यान्हव्यापिन्यांकार्यं प्रातःशुक्लतिलैःस्नात्वामध्यान्हेपूजयेन्नृप पार्थिवस्यगणेशस्य तत्रै
वंपूजनंचरेदितिवचनात् दिनद्वयेतद्व्याप्तौएकदेशव्याप्तौवापूर्वान्यथापरा चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते मध्यान्हव्यापिनी
सातुपरतश्चेत्परेहनिइतिबृहस्पत्युक्तेः अथव्रतविधिः मासपक्षाद्युल्लिख्यममेहजन्मनिजन्मांतरेचपुत्रपौत्रधनविद्याजययशःश्री
कामायुष्याभिवृध्यर्थंसिद्धिविनायकप्रीत्यर्थंयथाज्ञानेनपुरुषसूक्तपुराणोक्तमंत्रैर्ध्यानावाहनादिषोडशोपचारैःपंचामृतैःसहपा-
र्थिवगणपतिपूजनंकरिष्ये तथाचमूर्तौप्राणप्रतिष्ठादिकमासनादिकलशाराधनंपुरुषसूक्तन्यासंचकरिष्ये पार्थिवमूर्तौदेवतास्थाप
ने हेरंबायन० मृदाहरणं कमुखायनमः संघट्टनं गौरीसुतायन० स्थापनं० अथप्राणप्रतिष्ठांकुर्यात् अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्र
ह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामाथर्वाणिछंदांसि क्रियामयवपुः प्राणाख्यादेवता आंबीजं ह्रींशक्तिः क्रौंकीलकं अस्यांमू
र्तौप्राणप्रतिष्ठापनेविनियोगः ॐ आंह्रींक्रौंअंयंरंलंवंशंषंसंहंळंक्षंअः अस्यांमूर्तौप्राणास्तिष्ठंतु पुनः आंह्रींक्रौंअं० अस्यांमूर्तौजी
वइहस्थितः पुनः ॐ आं० अस्यांमूर्तौसर्वेंद्रियाणिश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानिइहैवागत्यसुखंचिरंतिष्ठं-
तुस्वाहा असुनीतेपुनरितिऋचंपठित्वा गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीः करिष्ये ॐ १५ तच्चक्षुर्देवहितं०



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

देवस्याज्येननेत्रोन्मीलनंकृत्वा पंचोपचारपूजनंकुर्यात् अथध्यानं एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं पाशांकुशधरंदेवंध्यायेत्सि
द्धिविनायकं ध्यायेदेवंमहाकायंतप्तकांचनसन्निभं दंताक्षमालापरशुपूर्णमोदकहस्तकं मोदकासक्तशुंडाग्रमेकदंतंविनायकं
इतिध्यानं आवाहयामिविघ्नेशसुरराजार्चितेश्वर अनाथनाथसर्वज्ञपूजार्थंगणनायक सहस्रशीर्षेत्यावाहनं विचित्ररत्नरचितं-
दिव्यास्तरणसंयुतं स्वर्णसिंहासनंचारुगृहाणसुरपूजित पुरुषएवेदं० आसनं० सर्वतीर्थसमुद्भूतंपाद्यंगंधादिसंयुतं विघ्नराजगृहा
णेदं भगवन्भक्तवत्सल एतावान० पाद्यं० अर्घ्यंचफलसंयुक्तंगंधपुष्पाक्षतैर्युतं गणाध्यक्षनमस्तेस्तुगृहाणकरुणानिधे त्रिपादूर्ध्व०
अर्घ्यं० दध्याज्यमधुसंयुक्तं मधुपर्कंमयाहृतं गृहाणसर्वलोकेशगणनाथनमोस्तुते मधुपर्कं० विनायकनमस्तुभ्यंत्रिदशैरभिवं
दित गंगोदकेनतोयेनशीघ्रमाचमनंकुरु तस्माद्वि० आचमनं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनात्प्रीयतांग-
णनायकः पंचामृतस्नानं गंगादिसर्वतीर्थेभ्यआनीतंतोयमुत्तमं भक्त्यासमर्पितंतुभ्यंगृण्हीष्वाभीष्टदायक यत्पुरुषेण० स्नानं
रक्तवस्त्रमिदंदेवदिव्यंकांचनसंभवं सर्वप्रदंगृहाणेदंलंबोदरहरात्मज तंयज्ञं० वस्त्रंस० राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं गृहा
णचारुसर्वज्ञभक्तानांवरदोभव तस्माद्य० उपवस्त्रं० यज्ञोपवीतं० उद्यद्भास्करसंकाशंसंध्यावदरुणंप्रभो वीरालंकरणंदिव्यंसिंदूरंप्र
तिगृह्यतां सिंदूरं नानाविधानिदिव्यानिनानारत्नोज्वलानिच भूषणानिगृहाणेशपार्वतीप्रियनंदन आभरणानि० कस्तूरीचंदनं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चैवकुंकुमेनसमन्वितं विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां तस्माद्यज्ञात्सर्वहुतेतिगंधं रक्ताक्षतांश्चदेवेशगृहाणद्विरदानन
ललाटपटलेचंद्रतस्योपर्यवधार्यतां अक्षतान् माल्यादीनिसुगंधीनि॰ करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैः शुभैः शतपत्रै
श्चकल्हारैरर्चयेद्गणनायकं तस्मादश्वेतिपुष्पाणि अथांगपूजा गणेश्वराय॰ पादौपू॰ विघ्नराजाय॰ जानुनीपूज॰ आखुवा
हनाय॰ऊरूपू॰ हेरंबाय॰ कटीपू॰ कामारिसूनवे॰ नाभिंपू॰ लंबोदराय॰ उदरंपू॰ गौरीसुताय॰ स्तनौपू॰ गणनायकाय॰ हृ
दयं॰ स्थूलकर्णाय॰ कंठंपू॰ स्कंधाग्रजाय॰ स्कंधौपू॰ पाशहस्ताय॰ हस्तौपू॰ गजवक्त्राय॰ वक्त्रंपू॰ विघ्नहर्त्रे॰ ललाटंपू॰ सर्वे
श्वराय॰ शिरःपूज॰ गणाधिपाय॰ सर्वांगंपू॰ अथपत्रपूजा सुमुखाय॰ मालतीप॰ गणाधिपाय॰ भृंगिराजपत्रं॰ उमापुत्राय॰
बिल्वपत्रं॰ गजाननाय॰ श्वेतदूर्वापत्रं॰ लंबोदराय॰ बदरीपत्रं॰ हरसूनवे॰ धत्तूरपत्रं॰ गजकर्णकाय॰ तुलसीपत्रं॰ वक्रतुंडाय॰
शमीपत्रं॰ गुहाग्रजाय॰ अपामार्गपत्रं॰ एकदंताय॰ बृहतीपत्रं॰ विकटाय॰ करवीरपत्रं॰ कपिलाय॰ अर्कपत्रं॰ गजदंताय॰
अर्जुनपत्रं॰ विघ्नराजाय॰ विष्णुक्रांतपत्रं॰ वटवे॰ दाडिमीपत्रं॰ सुराग्रजाय॰ देवदारुप॰ भालचंद्राय॰ मरुतपत्रं॰ हेरंबाय॰
अश्वत्थपत्रं॰ चतुर्भुजाय॰ जातीपत्रं॰ विनायकाय॰ केतकीप॰ सर्वेश्वराय॰ अगस्ति॰ २१ दशांगंगुग्गुलंधूपंसुगंधंचमनोहरं
गृहाणसर्वदेवेशउमापुत्रनमोस्तुते यत्पुरुषं॰ धूपं॰ सर्वज्ञसर्वलोकेशत्रैलोक्यतिमिरापहं गृहाणमंगलंदीपंरुद्रप्रियनमोस्तुते



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ब्राह्मणोस्य॰दीपं॰ नैवेद्यंगृह्यतांदेव॰ नानाखाद्यमयंदिव्यंतुष्ट्यर्थंतेनिवेदितं मयाभक्त्याशिवापुत्रगृहाणगणनायक चंद्रमा
मन॰नैवेद्यं॰ एलोशिरलवंगादिकर्पूरपरिवासितं प्राशनार्थंकृतंतोयंगृहाणगणनायक मध्येपा॰उत्तरापोशं॰मुखप्रक्षालनं॰
मलयानलसंभूतंकर्पूरेणसमान्वितं करोद्वर्तनकंचारुगृह्यतांजगतःपते करोद्वर्तनं॰ बीजपूराम्रपनसखर्जूरीकदलीफले नारीके
लफलंदिव्यंगृहाणगणनायक इदंफलंम॰फलं॰ एकविंशतिसंख्याकान्मोदकान्घृतपाचितान् नैवेद्यंसफलंदद्यान्नमस्तेविघ्न
नाशिने गणेशाय॰मोदकार्पं॰ पूगीफलंमहद्दिव्यंनागवल्या॰तांबूलं॰ हिरण्यगर्भेतिदक्षिणां॰ वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममं
डितं पुष्परागसमायुक्तंभूषणंप्रतिगृह्यतां भूषणानि दूर्वायुग्मंगृहाणेदंगंधपुष्पाक्षतैर्युतं पूजयेत्सिद्धिविघ्नेशंप्रत्येकंपूर्व
नामभिः गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथामूषकवाहन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक कु
मारगुरवेतुभ्यंपूजनीयःप्रयत्नतः इतिदूर्वार्पणं चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वतेजांसिआर्तिक्यंप्रतिगृह्य
तां नीराजनं विघ्नेश्वरविशालाक्षसर्वाभीष्टफलप्रद प्रदक्षिणांकरोमित्वांसर्वान्कामान्प्रयच्छमे नाभ्याआसीतिप्रदक्षिणां
नमस्तेविघ्नसंहर्त्रेनमस्तेईप्सितप्रद नमस्तेदेवदेवेशनमस्तेगणनायक सप्तास्यासं॰ नमस्कारान्॰ विनायकेशपुत्रेतिगणराजः
स्कंदोत्तम देहिमेसकलान्कामान्वंदेसिद्धिविनायक यज्ञेनय॰ मंत्रपुष्पं॰ अथैकविंशतिगृह्यमोदकान्घृतपाचितान् स्थापयि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्वागणाध्यक्षसमीपेकुरुनंदन दशविप्रायदातव्याःस्थापयेद्दशआत्मनि एकंगणाधिपेदद्यात्सघृतंमोदकंशुभं दशानांमोदकानांचफलदक्षिणयायुतं विप्रायनवतुस्यर्थंवायनंतेददाम्यहं वायनमंत्रः विनायकस्यप्रतिमांवस्त्रयुग्मेनवेष्टितां तुभ्यंसंप्रददेविप्रप्रीयतांमेजनार्दनः विनायकगणेशानसर्वदेवनमस्कृत पार्वतीप्रियविघ्नेशममविघ्नंविनाशय इतिप्रार्थना अथकथा शौनकाद्याऋषिगणानैमिषारण्यवासिनः सूतंपौराणिकंश्रेष्ठमिदमूचुर्वचस्तदा ऋषयऊचुः निर्विघ्नेनतुकार्याणिकथंसिध्यंतिसूतज अर्थसिद्धिःकथंनृणांपुत्रसौभाग्यसंपदः दंपत्योःकलहेचैवबंधुभेदेतथानृणां उदासीनेषुलोकेषु कथंस्यात्सुखताभवेत् विद्यारंभेतथानृणांवाणिज्येचकृषौयथा नृपतेःपरचक्रस्यजयसिद्धिःकथंभवेत् कांदेवतांनमस्कृत्यकार्यसिद्धिर्भवेन्नृणां एतत्समस्तंविस्तार्यब्रूहिमेसूतपृच्छतः सूतउवाच सन्नद्धयोःपुराविप्राःकुरुपांडवसेनयोः पृष्टवान्देवकीपुत्रंकुंतीपुत्रोयुधिष्ठिरः युधिष्ठिरउवाच निर्विघ्नेनजयंमह्यंवदत्वंदेवकीसुत कांदेवतांनमस्कृत्यसम्यक्राज्यंलभेमहि श्रीकृष्णउवाच पूजयस्वगणाध्यक्षमुमामलसमुद्भवं तस्मिन्संपूजितेदेवेध्रुवंराज्यमवाप्स्यसि मासिभाद्रपदेशुक्लेचतुर्थ्यांपूजयेन्नृप मासिमाघेश्रावणेवामार्गशीर्षेतथाभवेत् गजवक्त्रेतुशुक्लायांचतुर्थ्यांपूजयेन्नृप यदान्वीद्रवतेभक्तिस्तदापूज्योगणाधिपः प्रातःशुक्लतिलैःस्नात्वामध्यान्हेपूजयेन्नृप निष्कमात्रसुवर्णेनतदर्धार्धेनवापुनः स्वश



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्त्यागणनाथस्यस्वर्णरौप्यमयाकृतिं अथवामृन्मयींकुर्याद्वित्तशाठ्यंनकारयेत् एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं पाशांकु
शधरंदेवंध्यायेत्सिद्धिविनायकं कृत्वापूजांप्रयत्नेनस्नाप्यपंचामृतैःपृथक् गणाध्यक्षेतिनाम्नावैगंधंदद्याच्चभक्तितः आवा
हनार्घ्यपाद्यंचदत्वापश्चात्प्रयत्नतः रक्तवस्त्रयुगंचैवदद्याद्देवायभक्तितः विनायकेतिपुष्पाणिधूपंचोमासुतायच दीपंरुद्रप्रि
यायेतिनैवेद्यंविघ्ननाशिने किंचित्सुवर्णपूजांचतांबूलंचसमर्पयेत् ततोदूर्वांकुरान्गृह्यविंशतिंचैकमेवहि पूजनीयःप्रयत्ने
नएभिर्नामपदैःसह गणाधिपनमस्तेस्तुउमापुत्राघनाशन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक एकदंतेभवक्त्रेतितथा
मूषकवाहन कुमारगुरवेतुभ्यंपूजनीयःप्रयत्नतः दूर्वायुग्मंगृहीत्वातुगंधपुष्पाक्षतैर्युतं एकैकेनतुनाम्नावैदत्वैकंसर्वनाम
भिः अथैकविंशतिंगृह्यमोदकान्घृतपाचितान् स्थापयित्वागणाध्यक्षसमीपेकुरुनंदन दशविप्रायदातव्याःस्वयंग्रा
ह्यास्तथादश एकंगणाधिपेदद्यात्सनैवेद्यंनृपोत्तम विनायकस्यप्रतिमांब्राह्मणायनिवेदयेत् तुभ्यंसंप्रददेदेवप्रीयतांमे
गजाननः विनायकगणेशत्वंसर्वदेवनमस्कृत पार्वतीप्रियविघ्नेशममविघ्नंविनाशय गणेशःप्रतिगृह्णातिगणेशोवैददाति
च गणेशस्तारकोभाभ्यांगणेशायनमोनमः कृत्वानैमित्तिकंकर्मपूजयेदिष्टदेवतां ब्राह्मणान्भोजयेत्पश्चाद्भुंजीयात्तैलव
र्जितं एवंकृतेधर्मराजगणनाथस्यपूजने विजयस्तेभवेन्नूनंसत्यंसत्यंमयोदितं वैष्णवाद्यास्तुदीक्षास्तुआदौपूज्योगणा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धिपः तस्मिन्संपूजितेविष्णुरीशोभानुस्तथात्युमा हव्यवाहसुरवादेवाःपूजितास्युर्नसंशयः चंडिकाद्यामृतगणाःपरितुष्टाभवं
तिच तस्मिन्संपूजितेविघ्नाभक्त्यासिद्धिविनायके यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः सिध्यंतिसर्वकार्याणिविनायकप्रसा
दतः इतिसिद्धिविनायकव्रतंभविष्योक्तंसंपूर्णं मासिभाद्रपदेशुक्लेशिवलोकेप्रपूजिता तस्यांस्नानंतथादानंउपवासोर्चनं
तथा क्रियमाणंशतगुणंप्रसादाद्यातिकोनृप चतुर्थ्यत्यिनुषंगः अस्यामेवचंद्रदर्शनेदोषमाह पराशरः कन्यादित्येचतुर्थ्यां
चशुक्लेचंद्रस्यदर्शनं मिथ्याभिदूषणंकुर्यात्तस्मात्पश्येन्नतंसदा तद्दोषशांतये जाप्यंविष्णुनोक्तंचमंत्रकं सिंहःप्रसेनमव
धीत्सिंहोजांबवताहतः सकुमारकमारोदीस्तवह्येषस्यमंतकः अथस्यमंतकोपाख्यानं नंदिकेश्वरउवाच शृणुष्वैकाग्रचित्तः
सन्व्रतंगाणेश्वरंमहत् चतुर्थ्यांशुक्लपक्षेतुसदाकार्यंप्रयत्नतः सनत्कुमारयोगींद्रयदीच्छेच्छुभमात्मनः नारीवापुरुषो-
वापियःकुर्याद्विधिवद्व्रतं मोचयत्याशुविघ्नेंद्रसंकष्टाद्वतिनंहितं अपवादहरंचैवसर्वविघ्नप्रणाशनं कांतारेविषमेवापिरणे
राजकुलेथवा सर्वसिद्धिकरंविद्धिव्रतानामुत्तमव्रतं गजाननप्रियंचाथत्रिषुलोकेषुविश्रुतं अतोनविद्यतेब्रह्मन्सर्वसंकष्टना
शनं सनत्कुमारउवाच केनचादौपुराचीर्णंमर्त्यलोकेकथंगतं एतत्समस्तंविस्तार्यब्रूहिगाणेश्वरंमहत् नंदिकेश्वरउ० चक्रेव्र
तंजगन्नाथोवासुदेवःप्रतापवान् आदिष्टोनारदेनैववृथालांछनमुक्तये सनत्कुमारउ० षड्गुणैश्वर्यसंपन्नःसृष्टिसंहारकारकः





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तापवान् आकर्ण्यसहसोत्थाययुयुधेयक्षराट्ततः तयोर्युद्धमभूद्घोरंहरिजांबवतोस्तदा द्वारकावासिनःसर्वेगतास्तेसप्तमेदिने मृ
तःकृष्णोनिरीक्ष्यंतोनिःसंदिग्धंविचार्यच परलोकक्रियांचक्रुःपरेतस्यतुतेतदा एकविंशद्दिनंयावद्बाहुप्रहरणोविभुः युयुधेतेनकृष्णे
णयुद्धकर्मणितोषितः जांबवान्भक्तनंस्मृत्वादृष्ट्वादेवबलंमहत् जांबवानुवाच अजेयोहंसुरैःसर्वैर्यक्षराक्षसदानवैः त्वयाजितो
हंदेवेशदेवस्त्वमसिनिश्चितं जानेत्वांविष्णवंतेजोनान्यथाबलमीदृशं इतिप्रसाद्यदेवेशंददौमाणिक्यमुत्तमं सुतांजांबवतींनामभार्या
र्थंवरवर्णिनीं पाणिंवैग्राहयामासदेवदेवंचजांबवान् मणिमादायदेवोपिजांबवत्यापिसंयुतः तद्वृत्तांतंसमाचष्टेद्वारकावासिनांस्वयं
सत्राजितस्यमाणिक्यंदत्तवान्संसदिस्थितः मिथ्यापवादसंशुद्धिंप्राप्तवान्मधुसूदनः सत्राजितोपिसंत्रस्तःकृष्णायप्रददौसुतां सत्य
भामांमहाबुद्धिर्ददौसर्वगुणान्वितां शतधन्वाक्रूरमुख्यायादवादुष्टमानसाः सत्राजितेननवैरंचक्रूरत्नाभिलाषिणः दुरात्माशतधन्वा
पिगतेकृष्णेचपांडवान् सत्राजितंनिहत्याशुमणिंजग्राहपापधीः कृष्णास्यपुरतःसत्यासमाचष्टेविचेष्टितं अंतर्हृष्टोबहिःकोपीकृष्णः
कपटिनायकः बलदेवपुरोवाक्यमुवाचधरणीधरः हत्वासत्राजितंदुष्टोमणिमादायगच्छति निहत्यशतधन्वानंगृहीत्वारत्नमावयोः
ममभाग्यंचतद्रत्नंभविष्यतिसुनिश्चितं एतच्छ्रुत्वाभयात्त्रस्तःशतधन्वापियादवः आहूयाक्रूरनामानंमाणिक्यंप्रददौनसः आरु
ह्यवडवांवेगान्निर्गतोदक्षिणांदिशं रथस्थावनुगच्छेतांतदारामजनार्दनौ शतयोजनमात्रेणममारवडवातदा पलायमानोनिहतःकृ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ष्णेनचपदातिना रथस्तेबलदेवेतु हतेरत्नस्यलोभतः नदृष्टंतत्र भतद्रत्नं बलदेवपुरोवदत् तदाकर्ण्यमहारोषादुवाचवचनंबली क
पटीत्वंसदाकृष्णलोभीपापीकृतनिश्चितं अर्थायस्वजनंहंसि कस्त्वांबंधुःसमाश्रयेत् अनेकशपथैः कृष्णोबलदेवंप्रसादयन् सो
पिधिक्कष्टमित्युक्त्वाययौवैदर्भमंडलं कृष्णोपिरथमारुह्य द्वारकांप्रययौपुनः तदैवोचुर्जनाःसर्वेनसाधीयानयंहरिः निष्का
शितोरत्नलोभाज्ज्येष्ठोभ्राताबलोबली तच्छ्रुत्वादीनवदनःपापीयानिवसंस्थितः वृथाभिशापात्संतप्तोबभूवसजगत्पतिः
अक्रूरोपिविनिष्क्रम्यतीर्थयात्रानिमित्ततः काशींगत्वासुखेनासौयजन्यज्ञपतिंप्रभुं तोषमुत्पादयामासतेनद्रव्येणबुद्धिमान्
सुरालयगृहैश्चित्रैर्नगरंसमकल्पयत् नदुर्भिक्षंनवैरोगाईतयोनचविड्वरं शक्विनाधार्यतेतत्रमणिःसूर्यस्यनिश्चितं जानंनपिहि
तत्सर्वंमानुषंभावमाश्रितः लोकाचारंतथामायामज्ञानंचसमाश्रितः बंधुवैरंसमुत्पन्नंलांछनंसमुपस्थितं वृथापवादबहुलंजायमानं
कथंहरेः इतिचिंतातुरंकृष्णंनारदःसमुपस्थितः गृहीत्वातत्कृतांपूजांसुखासनगतोब्रवीत् नारदउ॰ किमर्थंखिद्यसेदेव किंवाते
शोककारणं यथावृत्तंसमाचष्टेनारदायचकेशवः जानामिकारणंदेवयदर्थंलांछनंतव त्वयाभाद्रपदेशुक्लेचतुर्थ्यांचंद्रदर्शनं कृ
तंतेनसमुत्पन्नंलांछनंतुवृथैवहि श्रीकृष्णउ॰ वदनारदमेशीघ्रं कोदोषश्चंद्रदर्शने किमर्थंतुद्वितीयायांतस्यकुर्वंतिदर्शनं ना
रदउ॰ गणनाथेनसंशप्तश्चंद्रमारूपगर्वतः तद्दर्शनेनराणांहिवृथानिंदाभविष्यति श्रीकृष्णउ॰ किमर्थंगणनाथेनशप्तःश्चंद्रःसुधाभ





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यः इदमाख्यानकंश्रेष्ठंयथावद्वक्तुमर्हसि नारदउवाच गणानामाधिपत्येचरुद्रेणाविहितःपुरा अणिमामहिमाचैवलघिमागरिमातथा
प्राप्तिःप्राकाम्यमीशित्वंवशित्वंचाष्टसिद्धयः भार्यार्थंप्रददौदेवोगणेशस्यप्रजापतिः पूजयित्वागणाध्यक्षंस्तुतिंकर्तुंप्रचक्रमे ब्रह्मोवा
च गजवक्त्रगणाध्यक्षलंबोदरवरप्रद विघ्नराजाधिदेवेशसृष्टिसंहारकारक संपूजयेद्गणाध्यक्षंमोदकाद्यैःप्रयत्नतः तेषांप्रजायतेसि
द्धिर्निर्विघ्नेननसंशयः असंपूज्यगणाध्यक्षंयेवांछंतिस्फुरास्फुराः नतेषांजायतेसिद्धिःकल्पकोटिशतैरपि त्वद्भक्त्यातुगणाध्यक्षविष्णुः
पालयतेसदा रुद्रोपिसंहरत्याशुत्वद्भक्त्यैवकरोम्यहं इत्थंसंस्तूयमानोसौदेवदेवोगजाननः उवाचपरमप्रीतोब्रह्माणंजगतांपतिं श्रीग
णेशउवाच वरंब्रूहिप्रदास्यामियत्तेमनसिवर्तते ब्रह्मोवाच क्रियमाणस्यमेसृष्टिर्निर्विघ्नंजायतांप्रभो एवमस्त्वितिदेवोसौगृहीत्वामो
दकान्करे सत्यलोकात्समागत्यस्वेच्छयागगनेशनैः चंद्रलोकंसमारात्प्रचलितोगणनायकः उपहासंतदाचक्रेसोमोरूपमदान्वितः तं
दृष्ट्वाकोपताम्राक्षोगणनाथःसशापह दर्शनीयःस्फुरूपोहंसुंदरश्चाहमित्यथ गर्वितोसिशशांकत्वंफलंप्राप्स्यसिसत्वरं अद्यप्रभृतिलो
कास्त्वांनहिपश्यंतिपापिनं येपश्यंतिप्रमादेनत्वांनरामृगलांछन मिथ्याभिशापसंयुक्ताभविष्यंतिहतेध्रुवं हाहाकारोमहानुजातःश्रु
त्वाशापंचभीषणं अत्यंतम्लानवदनश्चंद्रोजलमथाविशत् कुमुदंकौमुदीनाथःस्थितस्तत्रप्रस्फुतालयः ततोदेवर्षिगंधर्वानिराशोद्वि
ग्नमानसाः तुराषाहंपुरोधायजग्मुस्तेतंपितामहं देवशंसस्वृंदस्यगणेशस्यचचेष्टितं दत्तशापंगणेशेनकथयामासुरादरात् विचार्य

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भगवान्ब्रह्मातान्सुरानिदमब्रवीत् गणेशशापोदेवेंद्रः शक्यतेकेनवान्यथा कर्तुंरुद्रेणनमयाविष्णुनाचापिनिश्चितं तमेवदेवदेवेशं
व्रजध्वंशरणंसुराः सएवशापमोक्षंत्वंकरिष्यतिनसंशयः देवाऊ० केनोपायेनवरदोगजवक्त्रोगणेश्वरः पितामहमहाप्राज्ञतदस्मा
कंवदप्रभो पितामहउ० चतुर्थ्यांदेवदेवोसौपूजनीयःसदैवहि कृष्णपक्षेविशेषेणनक्तंकुर्याच्चितद्व्रतं अपूपैर्घृतसंयुक्तैर्मोदकैः
परितोषयेत् मधुरान्नंहविष्यंचस्वयंभुंजीतवाग्यतः स्वर्णरूपंगणेशस्यदातव्यंद्विजसत्तमे शक्त्याचदक्षिणांदद्याद्वित्तशाठ्यंन
कारयेत् एवंसमेतैःस्तैःसर्वैः गीष्पतिःप्रेषितस्तदा सगत्वाकथयामासचंद्रायब्रह्मणोदितं व्रतंचक्रेततश्चंद्रोयथोक्तंब्रह्मणापु-
रा आविर्बभूवभगवान्गणेशोव्रततोषितः तंक्रीडमानंगणनायकंचतुष्टं चद्दृष्ट्वातुकलानिधानः त्वंकारणंकारणकारणानां
वेत्तासिवेद्यंचविभोप्रसीद प्रसीददेवेशजगन्निवासगणेशलंबोदरवक्रतुंड विरिंचिनारायणपूज्यमानक्षमस्वमेगर्वकृतंचहास्यं
येत्वामसंपूज्यगणेशनूनंवांछंतिमूढाःस्वकृतार्थसिद्धिं तेदेवनष्टाविश्रुतंचलोकेज्ञातोमयातेसकलःप्रभावः येचाप्युदासीनतरा
स्तुपापास्तेयांतिवासंनरकेसदैव हेरंबलंबोदरमेक्षमस्वदुश्चेष्टितंतत्करुणासमुद्रः एवंसंस्तूयमानोसौचंद्रेणाथगजाननः ग
णेशउवाच तुष्टोहंत्वद्दास्याभिर्नैतद्देयंमयानव ततोब्रह्मादयःसर्वेसमाजग्मुर्भयार्दिताः विशापंकुरुदेवेशप्रार्थयामोवयंन
व विशापमकरोच्चंद्रंकमलासनगौरवात् शुक्लपक्षेचतुर्थ्यांतुयेपश्यंतिसदैवहि मिथ्यापवादमावर्षंप्राप्स्यंतीहनसंशयः मा





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सादौ पूर्वमेवत्वांये पश्यंतिसदाजनाः चतुर्थ्यां शुक्लपक्षस्य तेषां दोषो न जायते यदाप्रभृति लोकोयं द्वितीयायां कृतादरः पुनरे-
वतु पप्रच्छ कलाधान् गणनायकं केनोपायेन देवेश तुष्टो भवसि तद्वद गणेश उवाच सदा कुर्याच्चतुर्थ्यां तु मोदकाद्यैः प्रपूज्य मां
रोहिण्यासहितं त्वां च समभ्यर्च्य विधानतः यथाशक्त्या च मद्रूपं स्वर्णेन परिकल्पितं दत्वा द्विजाय भुक्त्वाथ कथां श्रुत्वा विधानतः
सदा तस्य करिष्यामि संकष्टस्य निवारणं भाद्र शुक्ल चतुर्थ्यां तु मृन्मयी प्रतिमा शुभा हेमाभावे तु कर्तव्या नानापुष्पैः प्रपूज्य मां
ब्राह्मणान् भोजयेत्पश्चाज्जागरं च विशेषतः स्थापयेदव्रणं कुंभं धान्यस्योपरि शोभितं यथाशक्त्या च मद्रूपं शातकुंभेन निर्मितं वस्त्र
द्वयसमाच्छन्नं मोदकाद्यैः प्रपूज्य मां रक्तांबरधरो मर्त्यो ब्रह्मचर्यव्रतः शुचिः राजतस्य तु रूपं मे यथाशक्त्या विनिर्मितं वस्त्रं शिवप्रि-
यायेति उपवस्त्रं गणाधिपे गंधं लंबोदरायेति पुष्पं सिद्धिप्रदायकं धूपं गजमुखायेति दीपं मूषकवाहनं विघ्ननाथाय नैवेद्य फलं स
र्वार्थसिद्धिदं तांबूलं कामरूपाय दक्षिणां धनदाय च इक्षुदंडैर्मोदकैश्च होमं कुर्याच्च नामभिः विसर्जनं ततः कुर्यात्सर्वसिद्धिप्रदाय-
कं एवं संपूज्य विघ्नेशं कथां श्रुत्वा विधानतः मंत्रेणानेन तत्सर्वं ब्राह्मणाय निवेदयेत् दानेनानेन देवेश प्रीतो भव गणेश्वर सर्वत्र स
र्वदा देव निर्विघ्नं कुरु सर्वदा मानोन्नतिं च राज्यं च पुत्रपौत्रान् प्रदेहि मे गाश्च धान्यं च वासांसि दद्यात्सर्वस्वशक्तितः दत्वा तु ब्राह्मणैः
सर्वैः स्वयं भुंजीत वाग्यतः मोदकापूपमधुरं लवणं क्षारवर्जितं एवं करोति यः श्वेदंतस्याहं सर्वदा जयं सिद्धिं च धनधान्ये च ददामि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

विपुलांप्रजां इत्युक्त्वांतर्दधेदेवोविघ्नराजोविनायकः तद्व्रतंकुरुकृष्णत्वंततःसिद्धिमवाप्स्यसि नारदेनैवमुक्तश्चव्रतंचक्रेहरिःस्व
यं मिथ्यापवादंनिर्मृज्यततःकृष्णोभवच्छुचिः येशृण्वंतिनराख्यानंस्यमंतकमणीयकं चंद्रस्यचरितंसर्वं तेषांदोषोनजायते
भाद्रशुक्लचतुर्थ्यांतुकश्चिच्चंद्रस्यदर्शनं जातंतत्परिहारार्थंश्रोतव्यंसर्वमेवहि यदायदामनःकष्टंसंदेहउपजायते तदातदा
चश्रोतव्यमाख्यानंकष्टनाशनं एवमुक्त्वागतोदेवोगणेशःकृष्णतोषितः यदायदाश्चर्यसिकार्यउत्थितेनारीनरश्चाथकरोतितद्व्र
तं सिद्ध्यंतिकार्याणिमनेप्सितानिकिंदुर्लभंविघ्नहरेप्रसन्ने इतिश्रीस्कंदपुराणेनंदिकेश्वरसनत्कुमारसंवादेस्यमंतकोपाख्यान
संपूर्णं अथकपर्दिविनायकव्रतं श्रावणस्यसितेपक्षेचतुर्थ्यामेकभुग्व्रती व्रतंकुर्याद्गणेशस्यमासमेकंव्रतंचरेत् सर्वसिद्धि
करंनृणांसर्वंचैवसुरेश्वर तद्विधिःतिथ्यादिस्मृत्वा ममचतुर्विधपुरुषार्थसिद्ध्यर्थंकपर्दीगणेशव्रतमहंकरिष्ये मूलमंत्रेण
षडंगन्यासंपूजांकृत्वासमारभेत् ॐ नमोभगवतेसकलगुणात्मशक्तियुतानंतयोगपीतायनमः अष्टदलंकारयेत्सुः ॐतीव्रायै
न॰ ज्वालिन्यै॰ नर्मदायै॰ कामरूपिण्यै॰ उग्रायै॰ तेजोवत्यै॰ मध्येविघ्नविनाशिन्यै॰ अथध्यानं एकदंतंमहाकायंलंबोदरग-
जाननं विघ्ननाशकरंदेवंगणेशंप्रणमाम्यहं इमांपूजांगृहाणेशकपर्दीगणनायक आगच्छइतित्रिवारंपठेत् विनायकनमस्तु
भ्यमुमामलसमुद्भव इमांमयाकृतांपूजांप्रीत्यर्थंप्रतिगृह्यतां सहस्रशीर्षेत्यावाहनं अलंकारसमायुक्तंमुक्तामणिविभूषितं



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्वर्णसिंहासनंचारुप्रीत्यर्थंप्रतिगृह्यतां पुरुषएवेदमासनं गौरीसुतनमस्तेस्तु शंकरप्रियकारक भक्त्यापाद्यंमयादत्तंगृहाण
गणनायक एतावानस्येतिपाद्यं व्रतमुद्दिश्यविघ्नेशगंधपुष्पादिसंयुतं गृहाणार्घ्यंमयादत्तंसर्वसिद्धिप्रदायक तस्माद्विराळजायतेत्यर्घ्यं विनायकनमस्तेस्तु उमामलसमुद्भव
य अनाथनाथसर्वज्ञगीर्वाणपरिपूजित स्नानपंचामृतंदेवगृहाणगणनायक आप्यायस्वेतिदुग्धं दधिक्राव्णोइतिदधि घृतंमि
मिक्षेइतिघृतं मधुवातेतिमधु स्वादुःपवस्वेतिशर्करा इतिपंचामृतस्नानं गंगाजलंसमानीतंहेमांभोरुहवासितं स्नानंस्वीकुरुवि
घ्नेशकपर्दीगणनायक यत्पुरुषेणेतिस्नानं हरिद्रस्वर्णयंदेवदेवांगवसनोपमं भक्त्यादत्तंगृहाणेशलंबोदरहरात्मज तंयज्ञमितिव
स्त्रं नानालंकारसंयुक्तंनानारत्नविभूषितं अनेकदिव्याभरणंप्रीत्यर्थंप्रतिगृह्यतां आभरणानि राजतंब्रह्मसूत्रंच कांचनंचोत्तरीय
कं भालचंद्रनमस्तुभ्यंगृहाणवरदोभव तस्माद्यज्ञात्सर्वहुतेतिगंधं अक्षतान्धवलान्देवसिद्धगंधर्वपूजित भक्त्यादत्तान्गृहा
णेमान्सर्वसिद्धिप्रदायक अक्षतान् सुगंधीनिचपुष्पाणिऋद्धिसिद्धिप्रदायक कपर्दीगणनाथेशश्वेतपुष्पंददाम्यहं तस्मादश्वेति
पुष्पं अथांगपूजा कपर्दिगणनाथाय॰ पादौपू॰ गणेशाय॰ जानुनीपू॰ गणनाथाय॰ ऊरूपू॰ गणक्रीडाय॰ कटी॰ वक्रतुंडाय॰ हृ
दयंपू॰ लंबोदराय॰ कंठंपू॰ गजाननाय॰ स्कंधौ॰ हेरंबाय॰ हस्तौपू॰ विकटाय॰ मुखंपू॰ विघ्नराजाय॰ नेत्रेपू॰ धूम्रवर्णाय॰ शिरःपू॰
कपर्दिनेन॰ सर्वांगंपूज॰ अथावरणपूजा ईशानाय॰ अघोराय॰ तत्पुरुषाय॰ वामदेवाय॰ सद्योजाताय॰ इतिप्रथमावरणं पश्चि

ब्र॰रा॰
७६

तुंडाय॰ एकदंताय॰ महोदराय॰ गजाननाय॰ विकटाय॰ विघ्नराजाय॰ धूम्रवर्णाय॰ विनायकाय॰ इतिद्वितीयावरणं २ ब्राह्म्यै
न॰ माहेश्वर्यै॰ कौमार्यै॰ वैष्णव्यै॰ वाराह्यै॰ इंद्राण्यै॰ चामुंडायै॰ महालक्ष्म्यै॰ तृतीयावरण ३ इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋत
ये॰ वरुणाय॰ वायवे॰ सोमाय॰ ईशानाय॰ वरुणनिर्ऋत्योर्मध्ये अनंताय॰ इंद्रेशानयोर्मध्ये ब्रह्मणे॰ इतिचतुर्थावरणं ४ वज्रा
य॰ शक्तये॰ दंडाय॰ खड्गाय॰ पाशाय॰ अंकुशाय॰ गदायै॰ त्रिशूलाय॰ चक्राय॰ अब्जाय॰ इतिपंचमावरणं ५ दशांगंगुग्गुलं-
धूपंचंदनागरुसंयुतं उमासुतनमस्तुभ्यंगृहाणवरदोभव यत्पुरुषमितिधूपं गृहाणमंगलंदेवघृतवर्तिसमन्वितं दीपंज्ञानप्रदंचा
रुरुद्रप्रियनमोस्तुते ब्राह्मणोस्येतिदीपं नैवेद्यंगृह्यतांदेव॰ चंद्रमामनसेतिनैवेद्यं आचमनीयं इदंफलमितिफलं पूगीफलमि
तितांबूलं हिरण्यगर्भेतिदक्षिणां अग्निर्ज्योतिरविज्योतिर्ज्योतिरग्निर्विभावसुः ज्योतिस्त्वंसर्वदेवानांगणाधिपनमोस्तुते नीरा
जनं योनिकानिच॰ नाभ्याआसीतिप्रदक्षिणां नमोस्त्वनंताय॰ सप्तास्यासन्नितिनमस्कारः गणाधिपनमस्तेस्तुनमस्तेस्तुग-
जानन लंबोदरनमस्तेस्तुनमस्तेलंबिकासुत एकदंतनमस्तेस्तुनमस्तेस्तुभवप्रिय स्कंदाग्रजनमस्तेस्तुनमस्तेत्वीप्सितप्रद क-
पर्दिगणनाथेशसर्वसंपत्प्रदायक यज्ञेनयज्ञ॰ मंत्रपुष्पांजलिं अथब्रह्मचारीपूजा आकुणान्मुष्टिगणकान्विंशत्यष्टौवराटकान्
-विप्रायबटवेदद्याद्गंधपुष्पार्चितायच तंदुलान्वैततोदद्यात्पाकेचान्नेचशोभनान् कपर्दीगणनाथोसौप्रीयतांतंदुलैःसदा कर्ष्यांश्च

घ॰
४

७६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्वाविधानेनदेवमुद्वासयेत्ततः इतिकपर्दिगणपतिपूजा अथकथा कदाचिदुपविष्टश्च पार्वत्यासहशंकरः द्यूतेच्छाकिंअस्तिदे
विक्रीडितुंनवर्वाकिंशुभे दुरोदरमिषाज्जेतुंवांछितुंप्रत्युवाचसा ममापिअस्तिसापेक्षादीयतेचेत्पणोमम तवकिंकिमभीष्टंतुदास्यामि
परमेश्वरि लोकत्रयंवाइच्छास्तेकिमन्यैर्वचनैर्वृथा पृच्छामित्वांवचोदेविदातव्यंकिंकिमिच्छसि विश्वासोयेनजायेततद्ददाद्यशुभान-
ने वाक्यमेवंविधंश्रुत्वाशर्वाणीचशिवांतिके नविश्वासोस्तितेवाक्येजित्वादास्यसिमत्पणः इतिश्रुत्वावचोदेव्याःशंकरःप्राहनिश्चयं पणः
प्रकल्प्यतांदेविदीयतेमेनसंशयः भावंसंचिंत्यदेवस्यसत्वरात्क्रीडितुंययौआयुधानिततोदेवपणेयोजितवान्हरः त्रिशूलंत्रिदशाच्छर्वीजि
तवत्येववल्लभा तस्मिन्कर्मणितंजित्वापणमन्यंशिवाग्रहीत् एवंडमरुकादीनितान्यन्यान्यजयत्पृथक् दीनोभूत्वामहादेवोभवानीमब्र
वीदिति शार्दूलचर्मतन्मध्येदेहिमेगिरिजेशुभे नचैवंवक्तुमुचितंमहादेवपणेगते पणेजितेनदास्यामिपूर्वमुक्तोसितत्स्मर अविचिं
त्यब्रवीषित्वंजगदीशकृपानिधे इतिश्रुत्वावचोदेव्याःकुपितोसौमहेश्वरः आद्वादशादिनंदेविनकरिष्यामिभाषणं इत्युक्त्वाचमहा-
देवस्तत्रैवांतरधीयत रक्षरक्षमहादेवकिंजीवनमतःपरं इतिसंचिंत्यसादृष्टुमुद्यानंप्रत्यपद्यत गिरिजातत्रवनितावृंदंदृष्ट्वाब्रवीदिति
किमर्थमागताःसर्वाःकिमेतत्क्रियतेधुना कपर्दिगणनाथस्यव्रतंकर्तुमिहागताः तस्यपूजांविहायादौइदानींश्रूयतेकथा किमर्थंतद्व्र
तंनार्योयुष्माभिःक्रियतेवने फलमस्यकिमस्तीतिपार्वतीप्राहताःप्रति पृच्छतेकिंत्वयादेविनरैर्नारीभिरंबिके अभीष्टसिद्धिरस्मिन्

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र·रा·
७७

स्तुवर्त्ततेभुवनत्रये इतिश्रुत्वावचस्तासां पार्वतीप्राहताभुवि प्रातःकुपित्वाभगवान्निर्गतस्तुमहेश्वरः तस्यसंदर्शनायैवकरिष्येव्र-
तमुत्तमं व्रतस्यैतस्यकिंदानंविधानंकीदृशंमम सर्वंविचिंत्यमनसाकथयंतुसुरांगनाः स्त्रियऊचुः कालोविधानंदानंचव्रतस्यास्य
फलंतथा तत्सर्वंसावधानेनवक्ष्यामिशृणुपार्वती पातादिदोषरहितेसचतुर्भानुवासरे इषेमासिव्रतंसम्यक्गणेशार्पितमान-
सः तैलतांबूलभोगादीन्वर्जयित्वाशिवप्रिये मंदवारेतुभुंजीयादेकवारंमतंयथा प्रातःकालेशुचिर्भूत्वास्नानंकुर्याद्विधानतः
वापीकूपतडागेषुनद्यांशुक्लतिलैःसह संध्यादिकंयथानित्यंसर्वंनिर्वर्त्ययत्नतः अर्चनागारमासाद्यगोमयेनोपलिप्यच गोचर्म
मात्रंतन्मध्येकुर्यादिंधनेनमंडलं तन्मध्येष्टदलंपद्मंतन्मध्येगणनायकं पूजयेत्स्वच्छकुसुमैर्हरिद्राभिश्रिताक्षतैः गांगींगुंगैंगौं
गश्चन्यासंकृत्वाततःपरं मंत्रेणानेनकुसुमैर्देवमावाह्यनिक्षिपेत् अथवागणनाथस्यप्रतिमामथपूजयेत् ततस्तद्गतचित्तःस
न्ध्यानंकुर्याद्विधानतः एकदंतंमहाकायंलंबोदरगजाननं विघ्ननाशकरंदेवंहेरंबंप्रणमाम्यहं इमांपूजांगृहाणेशकपर्दीगणनाय-
क आगच्छेतित्रिरुच्चार्यकुर्यादावाहनादिकं पुराणमंत्रैरथवावेदमंत्रैश्चषोडशैः पूजयेदुपचारैश्चमूलमंत्रेणपार्वति तत्तत्प्रका
शकैर्मंत्रैर्गंधपुष्पाक्षतादिभिः इंद्रादिलोकपालांश्चपूजयेद्देवसन्निधौ लंबोदरनमस्तेस्तुनमस्तेत्वंविकारकृत एकदंतनमस्तेस्तुन-
मस्तेत्वीप्सितप्रद कपर्दिगणनाथस्यसर्वसंपत्प्रदायिनः पूजाप्रकारःकथितस्तवनाभिःशुचिस्मिते अकणानंजलिमतान्हविष्य

च·
४

७७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्रीहितंदुलान् स्वच्छान्यत्नेनसंशोध्यचूर्णंकृत्वामहेश्वरी शिवेतुचूर्णंप्रथमेभानुवारेधृतंचंद्रवत् कुर्याद्द्वितीयेसंचूर्णंचंद्रवत्पिष्टका
ष्टकं तृतीयेपायसान्नंचदध्यन्नंचचतुर्थके आनीयाष्टांशकंसम्यक्देवंसंपूज्यभक्तितः कल्पितान्नानिविधिवद्दद्यंतेयानितानि-
च तेषांतेषामष्टमांशंतस्मैसम्यक्समर्पयेत् ततःश्रद्धायबटवेदद्याद्देववराष्टकं मुष्ट्यामितंतंदुलांश्चभुंजीयाद्भागसप्तकं याः
कामयंतेयेभक्ताःपूजास्तेशाप्नुवंतिहि इत्यूचुस्तांभवानींतुस्त्रियोविगतकल्मषाः तासांतद्वचनंश्रुत्वातदानीमकरोद्व्रतं तत्रक्षणा
च्चविश्वेशः प्रत्यक्षःसमजायत् त्रिलोकनाथदेवेशकरुणाकरशंकर दीनामनन्यगतिकांभक्तवत्सलपाहिमां तुष्टश्चशंकरः-
प्राहकथमेतत्त्वयाकृतं कपर्दिगणनाथस्यमाहात्म्यात्किंनसिध्यति व्रतस्यैतस्यमाहात्म्यंज्ञातुंवांछितवान्स्वयं उद्दिश्यागमनं
विष्णोरकरोत्तद्व्रतंशिवः तदानींगरुडारूढःसमागत्यतमब्रवीत् मदागमनिमित्तंकिंकिंकृतंशंकरत्वया ममापिज्ञापनीयंतदि-
त्युक्तेज्ञापयच्छिवः तथैतदकरोद्विष्णुरुद्दिश्यागमनंविधेः आगतःसन्विधिःशीघ्रंममाज्ञापयमाधव प्रयोजनंचास्तिविधेत
वागमनकारणं एकदंतव्रतंकिंचिद्भवत्येवनसंशयः इंद्रागमनमुद्दिश्यतदानींतेनतत्कृतं आगत्यसहसासोपिममाज्ञापयविश्व
सृट् हेरंबव्रतमाहात्म्यंदृष्टमेवंकृतंमया ममापिज्ञापनीयंतदित्युक्तोविधिनोदितं विक्रमादित्यमुद्दिश्यवज्रीतदकरोच्चसः आ
गतोहंमनुष्यस्त्वामिंद्रतत्तेकिमीप्सितं कपर्दिहस्तिवदनव्रतमाहात्म्यमीदृशं इतिज्ञातुंमयाभीष्टंतल्लब्धंतेनतदाब्रवीत् विधानंतस्य

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

माहात्म्यंज्ञापनीयंत्वयेतिमे पप्रच्छविक्रमादित्यउत्सुकश्चपुरंदरं पुरंदरमुखाज्ज्ञात्वातत्सर्वस्वपुरीमगात् सायुधःप्रययौराजापराक्र
मपरायणः कपर्दीशिव्रतंकृत्वामहिष्याःपुरतोवदत् जेष्यामिसकलान्शत्रून्प्राप्स्यामिचमहोन्नतिं तस्यव्रतस्यकिंदानमितिसा
प्राहविक्रमं मत्पुवाचक्रियामर्कोदद्यादेकंवराटकं एवंचेत्तन्नकर्तव्यंमस्तेहेयत्रकुत्रचित् एवंराज्ञोमुखाच्छ्रुत्वादूषयामासतद्व्रतं
कपर्दिगणनाथेनकिंस्यान्ममस्तुशोभनं नक्रियतेमयानाथकपर्द्यारव्यंतुयद्व्रतं इत्यादिदूषणाद्दाशुकुष्टव्याधिमवाप्स्यसि कुष्टव्या
धियुतांपत्नींदृष्ट्वाराजाब्रवीत्तदा नस्थातव्यंत्वयात्रेतिसर्वंराज्यंविनश्यति अर्कस्यवचनंश्रुत्वोशम्याश्रममगाच्चसा परिचर्यावसात्तु
ष्टास्तस्याःसर्वेमुनीश्वराः निश्चित्ययोगमार्गेणसर्वेतामब्रुवन्सतीं कपर्दीशिव्रताक्षेपाद्दुःखंप्राप्तंत्वयाशुभे कुरुचतद्व्रतंसम्यक्स
र्वंभद्रंभविष्यति ऋषिणामाज्ञयासाचकपर्दीशिव्रतंमहत् तदानींराजमहिषीदिव्यदेहमवापसा अस्मिन्नंतरितेकालेभवान्यासः
ह शंकरः अगमच्चवृषारूढोभुवनानिचतुर्दश मध्येमार्गेद्विजेंद्रस्यरोदनंभववल्लभा श्रुत्वाब्राह्मणमारोदीःकिमर्थंतवरोदनं नकिम
प्यस्तिमेदुःखंदारिद्र्यादेवकेवलात् दुःखंचेत्तवविप्रेंद्रकपर्दीशिव्रतंकुरु एतत्कर्तुंव्रतंदेविसामर्थ्यंनास्तिमेधुना विक्रमार्कपुरेसर्वं
वेश्योदास्यतितत्कुरु कपर्दीशिव्रतेनैवमंत्रित्वंप्राप्स्यसिध्रुवं दारिद्र्यमोचनंसम्यक्भविष्यतिनसंशयः गृहंप्रतिसमागम्यगृहीत्वा
तंडुलान्द्विजः वैश्याद्गृहीत्वातत्सर्वंतदानीमकरोद्व्रतं तस्मिन्नर्कपुरेविप्रस्तुन्मंत्रित्वमवापसः आज्ञापयत्कपर्दीशिव्रतंवैश्यस्यतत्क्षणात्



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अकरोत्स्वसुतायाश्च विक्रमः पतिरस्त्विति व्रतप्रभावादादित्यमुपयेमे विशः स्रुता अनेनैव विवाहेन परां प्रीतिमवाप सा एवमंतरि
तेकाले मृगयार्थं प्रविश्य सः गहनं क्षुत्तृषार्त्तः सन्ययौ मुनिवराश्रमं उपचारैः श्रमं नीत्वा तेषामर्कोमिनोरमौ रमणीयाश्रमे तस्मिन्ददृशे या
मास विक्रमः इत्थं पृच्छन्मुनीन्सर्वान्दियाचे षाममांगना तवेयं महिषीत्युक्त्वा नयेनास्मै समर्पयन् समं महिष्या स्वपुरीं दिव्यनारीनरैः
र्युता हृष्टः सन्विक्रमादित्यः संभ्रमात्प्राह भूपतिः कपर्दीगणनाथस्य व्रतं कृत्वा स्त्रिया सह अजयद्विक्रमादित्यः सकलं शत्रुमंडलं गण
नाथव्रतेनैव पुत्रपौत्रवृतश्च सः धनधान्यादिसंपद्भिः सुखेनान्यवसद्भुवि एतद्व्रतं ये कुर्वंति याश्च कल्पविधानतः चतुर्णां पुरुषार्थानां ते
षां प्राप्तिर्भवेद्ध्रुवं हयमेधस्य विघ्नेतु संजाते सगरे पुरा इदमेव व्रतं कृत्वा पुनरश्वं प्रलब्धवान् इमां कथां पंचवारं प्रथमे भानुवासरे द्वि
तीये च तृतीये च षड्वारं शृणुयाद्व्रती इति श्रीस्कंदपुराणे कपर्दिविनायकव्रतकथा समाप्ता आश्विनकृष्णचतुर्थ्यां दिशरथललिताव्र
तं तच्च पौर्णिमांते मासेन कार्तिकवद्यचतुर्थ्यां कार्यं देशकालौ संकीर्त्य मम पुत्रपौत्रादिसकलकामनासिद्ध्यर्थं दशरथलल
ताप्रीत्यर्थं यथामीलितोपचारैः पूजनमहं करिष्ये आसनादिकलशाराधनं करिष्ये आगच्छ ललिते देवि सर्वसंपत्प्रदायिनी यावत्पू
जां करिष्यामि तावत्वं सन्निधा भव आवाहनं नीलकौशेयवसनां हेमाभां कमलासनां भक्तानां वरदां नित्यं ललितां चिंतयाम्यहं ध्या
यामि कार्तस्वरमये दिव्ये नानामणिसमन्विते अनेकरत्नसंयुक्ते आसने संविश स्वभो आसनं गंगादिसर्वतीर्थेभ्यो मया प्रार्थन

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यात्हृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां पाद्यं॰ दक्षस्यदुहितासाध्वीरोहिणीनामविश्रुता पुत्रसंपत्तिकार्यार्थंगृहाणार्घ्यं
नमोस्तुते अर्घ्यं क्षीरोदार्णवसंभूत लक्ष्मीबंधोनिशाकर गृहाणार्घ्यंशशांकेशरोहिण्यासहितःशशिन् अर्घ्यं पाटलोशीरकर्पूरसुर-
भिःस्वादुशीतलं तोयमाचमनीयार्थंशिशिरंप्रतिगृह्यतां आचमनीयं पयोदधिघृतंमध्वाशर्करासुगुणान्वितं पंचामृतेनस्नपनंप्रीय
तांपरमेश्वरी पंचामृतस्नानं मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानायतेमयाभक्त्यानीरंस्वीक्रियतांशिवे स्नानं सर्वसत्वा-
धिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां वस्त्रं मलयाचलसंभूतंघनसारंमनोहरं हृदयानंदनंचारुचं
दनंप्रतिगृह्यतां चंदनं हरिद्रांकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्यं कूष्मांडैर्मालती-
काद्यैर्जातिपुष्पैःसुगंधिभिः मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां पुष्पाणि अथांगपूजा दशांगललितायैनमः पादौपूजयामि
भवान्यै॰ गुल्फौपू॰ सिद्धेश्वर्यै॰ जंघेपू॰ भद्रकाल्यै॰ जानुनीपू॰ श्रियैन॰ ऊरूपू॰ विश्वरूपिण्यै॰ कटीपू॰ देव्यै॰ नाभिंपू॰ वरदा
यै॰ कुक्षिंपू॰ शिवायै॰ हृदयंपू॰ वागीश्वर्यै॰ स्कंधौपू॰ महादेव्यैबाहूपू॰ भद्रायै॰ करौपू॰ पद्मिन्यै॰ कंठंपू॰ सरस्वत्यै॰ मुखंपू॰
कमलासनायै॰ नासिकांपू॰ महिषमर्दिन्यै॰ नेत्रे पू॰ लक्ष्म्यै॰ कर्णौपू॰ भवान्यै॰ ललाटंपू॰ विंध्यवासिन्यै॰ शिरःपू॰ सिंहवाहिन्यै॰
सर्वांगंपू॰ वनस्पतिरसोद्भूतोगंधाढ्यश्चमनोहरः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां धूपं साज्यंचवर्तिसंयुक्तं॰ दीपं नैवेद्यं





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गृह्यतांदेव॰ नैवेद्यं॰ मध्येपानीयं॰ इदंफलमितिफलं॰ पूगीफलंमह॰ तांबूलं॰ हिरण्यगर्भेतिदक्षिणां कर्पूरगौरं॰ नीराजनं॰ नमोदेव्यै
महादेव्यै॰ मंत्रपुष्पं॰ यानिकानिचपापानि॰ प्रदक्षिणां॰ अन्यथाशरणंनास्तित्वमेवशरणंमम तस्मात्कारुण्यभावेनरक्षमांपरमेश्व
रि दशरथनामयादेवीदशापुष्पदशाक्षरा पुत्रार्थीकामयेदेवि सर्वान्कामान्प्रयच्छमे प्रार्थना दशरथललितादेव्याव्रतसंपूर्णहेतवे
वायनंद्विजवर्यायसहिरण्यंददाम्यहं वायनं सवाहनाशक्तियुतावरदापूजितामया ममानुग्रहंकुर्वाणागच्छत्वंनिजमंदिरं अथकथा
सूतउवाच अरण्येवर्तमानास्तेपांडवादुःखकर्षिताः कृष्णंदृष्ट्वामहात्मानंप्रणिपत्ययथाक्रमं युधिष्ठिरउवाच देवदेवजगन्नाथ
लक्ष्मीप्रियजनार्दन कथयस्वसुरश्रेष्ठदशांगललिताव्रतं कथमेषासमुत्पन्नाकेनादौपूजिताभुवि पूजनात्किंफलावाप्तिःकथय-
स्वसुरेश्वर श्रीकृष्णउवाच पुरात्रेतायुगेपार्थराजादशरथोमहान् तस्यभार्यातुकौसल्याअपुत्रासापतिव्रता अथाजगामक
स्मिंश्चिद्दृष्यशृंगऋषीश्वरः स्वागतंचकृतंराज्ञासोपविष्टोवरासने तेनराज्ञामुनिश्रेष्ठःस्तोत्रैश्चबहुतोषितः तस्यभक्त्यातुसंतुष्टो
ऋषिर्वचनमब्रवीत् मुनिरुवाच तुष्टोहंतवराजेंद्रकौसल्याभार्ययासह ब्रूहित्वंचमहाभागकिंप्रियंतेकरोम्यहं दशरथउवाच य
दितुष्टोसिमेविप्रअपुत्रोहंऋषीश्वर तीर्थंवाव्रतमेकंवातद्वदस्वमुनीश्वर मुनिरुवाच शृणुराजन्नवहितोव्रतमेकंब्रवीमिते पुत्रका
मव्रतंश्रेष्ठंकृतंराजन्सुरासुरैः रोहिणीनामचंद्रस्यभार्यापरमवल्लभा सा चैवललितानाम्नीरोहिणीतिनराधिप आश्विनस्यसितेप-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्षेदशम्यादिप्रपूजयेत् दशम्यादिचतुर्थ्यंतुद्दिप्दिनानिव्रतंचरेत् आश्विनस्यसितेपक्षेचतुर्थ्यांतुविशेषतः स्नात्वासायंतनेकालेसन्नमन्-
भक्तिभावतः कूष्मांडैर्मातुलिंगाद्यैर्जातिपुष्पैःसुगंधिभिः गंधपुष्पैस्तथाधूपैर्नैवेद्यैर्दशमोदकैः अर्घ्यंदद्याच्चदेव्यग्रेपूजयित्वाक्षमापये
त् ततोमंगलवाद्यैश्चगायद्भिश्चनरेश्वर चंद्रोदयेचसंप्राप्तेअर्घ्यंदद्याद्युधिष्ठिर शंखेनतोयंसमादायसपुष्पाक्षतचंदनैः जानुभ्यामवनिंग
त्वाचंद्रायार्घ्यंनिवेदयेत् पंचरत्नसमायुक्तंदशपुष्पैःसमन्वितं अक्षतैश्चसमायुक्तंचंद्रायार्घ्यंनिवेदयेत् दशरथनामयादेवीदशपु
ष्पादशांजलीः चंद्रेणसहितेदेविगृहाणार्घ्यंनमोस्तुते दशरथनामयादेवीनित्यमाराधितामया पुत्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छ
मे दशसंख्यांश्चकरकान्शीतोदकसमन्वितान् वर्षेवर्षेप्रदद्यानिप्रत्येकंकरकानिच इत्यंप्रपूजयेद्देवींसर्वदातुप्रयत्नतः अर्वाकृयाद
शवर्षाणांपूजयेद्भक्तिभावतः नारीनरोवाराजेंद्रव्रतमेतत्करोतिवै यंयंचिंतयतेकामंव्रतस्यास्यप्रभावतः पुत्रपौत्रधनंधान्यंलभतेनात्र
संशयः इतिभविष्योत्तरपुराणेदशरथललिताव्रतकथासंपूर्णा अथोद्यापनं उद्यापनविधिंवक्ष्येव्रतसंपूर्तिहेतवे कृष्णपक्षेचतु
र्थ्यांतुआश्विनेव्रतमाचरेत् दशाविप्रैःसपत्नीकैर्वेदवेदांगपारगैः स्नात्वासायंतनेकालेसर्वैस्तैर्भक्तिभावतः चतुस्तंभंचतुर्द्वारंकद
लीस्तंभमंडितं तन्मध्येकारयेत्पद्मंपंचवर्णैःसुशोभितं कलशंस्थापयेत्तत्रविधानेनसमन्वितं ताम्रंवामृन्मयंकुंभंवस्त्रयुग्मेनवेष्ट
येत् तस्योपरिन्यसेद्देवंरोहिण्यासहितंविधुं सुवर्णनिर्मितंदेवंचतुर्भुजसमन्वितं सौवर्णीरोहिणीकार्याचंद्रमारजतस्यच पूर्वोक्ते





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नविधानेनपूजांकृत्वासमाहितः एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः मोदकान्कारयेद्राजन्तिलजानेकविंशतिं दशविप्रायदातः-
व्याआत्मार्थंस्थापयेद्दश एकोदेवायदातव्योललितामीनयेव्रती दशरथललितादेव्याव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यं
ददाम्यहं दशरथनामयादेवीनित्यमाराधितामया पुत्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छमे इतिसंप्रार्थ्यदेवेशीन्चंद्रायार्घ्यंनिवेदयेत्
स्वगृह्योक्तविधानेनकृत्वाग्निंस्थापयेत्ततः होमंचैवप्रकुर्वीतपायसलड्डुकैः अष्टोत्तरशतंसद्योअष्टाविंशतिमेववा जुहुया
चंद्रमंत्रेणगाणेशेनतथैवच एवंसमाप्यहोमंतुतत्राचार्यंप्रपूजयेत् रूत्वद्दिदं शत्रुघ्नैःपक्वान्नैश्चप्रपूजयेत् विप्रायपीठदानंच
ततःकुर्याद्विसर्जनं ततःपुत्राःप्रजायंतेधनधान्यसमन्विताः सौभाग्यपुत्रसंपत्तिर्जायतेभूभृतांवर अवैधव्यंचलभतेसर्वान्कामान
वाप्नुयात् एतत्तेकथितंभूपकिमन्यच्छ्रोतुमिच्छसि कृतेदशरथेनास्मिन्कौसल्याभार्ययासह तुष्टादशरथादेविगणेशेनसचंद्रमाः
यस्मात्कृतकृत्योराजाभार्ययासहमोदते तस्माद्दशरथानामललिताभुविकीर्तिता एतत्तेकथितंराजन्दशांगललिताव्रतं यइदंशृणुयान्नि
त्यंश्रावयेद्वासमाहितः अश्वमेधसहस्रस्यफलंतस्यध्रुवंभवेत् इतिश्रीभविष्योत्तरपुराणेदशरथललिताव्रतोद्यापनंसंपूर्णं अ-
थकार्तिककृष्णाचतुर्थ्यांअथवादक्षिणदेशेआश्विनकृष्णाचतुर्थ्यांकरकचतुर्थीव्रतं तच्चलिख्यते अत्रस्त्रीणामेवाधिकारः तासामे-
वफलश्रुतेः आचम्यमासपक्षाद्युल्लिख्य ममसौभाग्यपुत्रपौत्रादिसुस्थिरश्रीप्राप्तयेकरकचतुर्थीव्रतंकरिष्ये इतिसंकल्प्य चंद्रं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लिख्यत्ततः अधस्ताच्छिवं षण्मुखयुक्तां गौरीं लिखित्वा षोडशोपचारैः पूजयेत् पूजामंत्रः नमः शिवायै शर्वाण्यै सौभाग्यं संततिं शु
भां प्रयच्छ भक्तियुक्तानां नारीणां हरवल्लभेति ततः नमोंतनाममंत्रेण शिवषण्मुखगौरीगणपतीनां पूजा कार्या ततः सपक्वान्ना
नां अक्षतसंयुक्तान् दशकरकान् ब्राह्मणाय दद्यात् ततः पिष्टकनैवेद्यं भोज्यं सर्वं निवेदयेत् ततश्चंद्रोदयोत्तरं चंद्रायार्घ्यं दद्यात् अथक
था मांधातोवाच अर्जुने तु गते तस्मिं इंद्रकीलगिरिं प्रति विषण्णमनसा सा कृष्णा द्रौपदी समचिंतयत् अहो किरीटिना कर्म समारब्धं सु
दुष्करं बहवो विघ्नकर्त्तारो मार्गे वै परिपंथिनः चिंतयित्वेति सा देवी कृष्णा कृष्णं जगद्गुरुं भर्तुः प्रियचिकीर्षंति सापृच्छद्विघ्नवारणं
द्रौपद्युवाच कथयस्व जगन्नाथ व्रतमेकं सुदुर्लभं यत्कृत्वा सर्वविघ्नानि विलयं यांति तद्वद श्रीकृष्ण उवाच एवमेव महाभागे शंभुः
पृष्टः किल मया तस्यास्तद्वचनं श्रुत्वा प्राह देवो महेश्वरः शृणु देवि वरारोहे वक्ष्यामि त्वां महेश्वरि सर्वविघ्नहरेत्याह करकाख्या चतुर्थि-
का पार्वत्युवाच भगवन् कीदृशी प्रोक्ता चतुर्थी करकाभिधा विधानं कीदृशं प्रोक्तं केनेयं च पुरा कृता ईश्वर उवाच शक्रप्रस्थपुरे रम्ये विद्व
ज्जनसमाकुले स्वर्णरौप्यसमाकीर्णे लभ्राकारशोभने दिव्यनारीजनालोके वशीकृतजगत्त्रये वेदध्वनिसमायुक्ते स्वर्गादपि मनोहरे
वेदशर्मा द्विजस्तत्र वसन् देशे विदांवरः पत्नी तस्यैव विप्रस्य नाम्ना लीलावती शुभा तस्यां संजनयामास पुत्रान्सप्तामितौजसः कन्या वी
रावती नाम्नी सर्वलक्षणसंयुता नीलोत्पलाभनयना पूर्णेंदुसदृशानना ततः काले शुभे दिने विधिवच्च द्विजोत्तमः ददौ वेदांगविदुषे-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

विप्रायविधिपूर्वकं अत्रांतरेतुसातत्रचक्रेगौर्याशुभंव्रतं चतुर्थ्यांकार्तिकस्याथकृष्णायांतुविशेषतः स्नात्वासायंतनेकालेसर्वात्मा
भक्तिभावतः विलिख्यवटवृक्षंचगौरींतस्यतलेलिखेत् शिवेनविघ्ननाथेनषण्मुखेनसमन्वितान् गंधपुष्पाक्षतैर्गौरींमंत्रेणानेनपूज
येत् नमःशिवायैशर्वाण्यैसौभाग्यंसंततिंशुभां प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे तस्याःपार्श्वेमहादेवंविघ्ननाथंषडाननं
पुनःपुष्पाक्षतैर्धूपैरर्चयेच्चपृथक्पृथक् पक्वान्नाक्षतसंपन्नान्सुदीपान्करकान्दश तथापिष्टकनैवेद्यंभोज्यंसर्वन्निवेदयेत् प्रतीक्षंत्यः
स्त्रियःसर्वाश्चंद्रोदयपरास्थिताः साबालाविकलादीनाक्षुत्तृड्भ्यांपरिपीडिता निपपातमहीपृष्ठेरुरुदुर्बांधवास्तथा समाश्वास्य
वनेस्तांस्तुमुखमभ्युक्ष्यवारिणा तद्भ्रातानिंतयित्वैवमारुरोहमहावटं हस्तेचोल्कांसमादायज्वलंतींस्नेहपीडितः भगिन्यैदर्शयामा-
सचंद्रव्याजोदितंतदा तंदृष्ट्वार्तिमुत्सृज्यबुभुजेभावसंयुता चंद्रोदयंनमाज्ञायअर्घ्यंदत्वाविधानतः तद्दोषेणमृतस्तस्याःपति
स्तत्पापदूषितः पतिंतथाविधंदृष्ट्वाशिवमभ्यर्च्यसापुनः व्रतंनिरशनंचक्रेयावत्संवत्सरोगतः चक्रुःसंवत्सरेतीतेव्रतंतद्भ्रातृयोषितः पू
र्वोक्तेनविधानेनसापिचक्रेशुभानना तदायाताशचीदेवीकन्याभिःपरिवारिता एतदेवव्रतंकर्तुमागतास्वर्गलोकतः वीरावत्यास्तदा-
भ्याशमगमद्भाग्यतःस्वयं दृष्ट्वातांमानुषींदेवींपप्रच्छसकलांशची वीरावतीतदापृष्टाप्रोवाचविनयान्विता अहंपितृगृहंप्राप्तामृतोयं
मेपतिःप्रभुः नजानेकर्मणःकस्यफलंप्राप्तंमयाधुना ममभाग्यवशाद्देवीआगतासिमहेश्वरी अनुगृण्हीष्वमांमातर्जीवयाशुपतिंम

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मे इंद्राण्युवाच त्वयापितृगृहेपूर्वंकुर्वंत्याकरकव्रतं तद्देवार्घ्यंत्वयादत्तंविनाचंद्रोदयंशुभे तेनतेव्रतदोषेणस्वामीलोकांतरंगतः इ
दानींकुरुयत्नेनकरकव्रतमुत्तमं पतिंतेजीवयिष्यामिव्रतस्यास्यप्रभावतः कृष्णउ० तस्यास्तद्वचनंश्रुत्वाव्रतंचक्रेविधानतः प्रस
न्नोसाभवद्देवीशक्रस्यप्राणवल्लभा त्वयाव्रतेकृतेदेवीजलेनाभ्युक्ष्यतत्पतिं जीवयामासचेंद्राणीदेववच्चबभूवसः ततश्चागाद्गृ-
हंस्वीयंरेमेसापतिनासह धनंधान्यंसुपुत्रांश्चदीर्घमायुश्चलब्धवान् तस्मात्त्वयापियत्नेनव्रतमेतद्विधीयतां सूतउवाच श्रीकृ
ष्णस्यवचःश्रुत्वानकारद्रौपदीव्रतं तद्व्रतस्यप्रभावेनजित्वातान्कौरवान्रणे लेभिरेराज्यमतुलंपांडवादुःखनाशनं येकरिष्यंति
शुभगाव्रतमेतन्निशागमे तेषांपुत्रांधनंधान्यंसौभाग्यंचातुलंयशः करकंक्षीरसंपूर्णंतोयपूर्णमथापिवा ददामिरत्नसंयुक्तंचिरं
जीवतुमेपतिः इतिमंत्रेणकरकान्प्रदद्याद्द्विजसत्तमे सुवासिनीभ्योदद्याच्चआदद्यात्ताभ्यएवच एवंव्रतंयाकुरुतेनारीसौभाग्यका
मया सौभाग्यंपुत्रपौत्रादिलभतेसुस्थिरंश्रियं इतिवामनपुराणेकरकाभिधाचतुर्थीव्रतंसंपूर्णं अथमाघशुक्लचतुर्थ्यांगौरी
चतुर्थीव्रतं हेमाद्रौब्राह्मेउमाचतुर्थ्यांमाघेतुशुक्लायांयोगिनीगणैः प्राग्भक्षयित्वासृष्टाचभूयस्त्वांगस्वकैर्गुणैः तस्मात्सातत्र-
संपूज्यानरैस्त्रीभिर्विशेषतः कुंदपुष्पैःप्रयत्नेनसम्यक्भक्त्यासमाहितैः कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकंकणैः रक्तपुष्पैस्त-
थाधूपैर्दीपैर्बलिभिरेवच गुडार्द्रकाभ्यांपयसालवणेनाथपालकैः पालकंमूढ्ढांडइतिहेमाद्रिः पूज्यास्त्रियश्चविविधास्तथावि





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्राश्यशोभनाः सौभाग्यवृद्धयेदेयंभोक्तव्यंबंधुभिःसह इतिगौरीचतुर्थीव्रतंब्रह्मपुराणोक्तं अथमाघशुक्लचतुर्थ्यांवरद
चतुर्थीव्रतं तदुक्तंकाशीखंडे माघशुक्लचतुर्थ्यांतुनक्तव्रतपरायणाः येत्वांधुंडेर्चयिष्यंतितेचास्युरसुरद्रुहः विधायवार्षिकीं-
यात्रांचतुर्थीप्राप्यमाधवी शुक्लान्तिलान्गुडैर्बध्वाप्राश्नीयाल्लड्डुकान्व्रती अत्रनक्तग्रहणात्प्रदोषव्यापिनीग्राह्येतिसिद्धं इति
वरदचतुर्थीव्रतं अथमाघकृष्णचतुर्थ्यांतिलकचतुर्थीव्रतं अथ पूजाविधिः येभ्योमाताकृ१ एवापित्रेतिचजपित्वा आग
मार्थंतु॰ घंटानादंकृत्वा अपसर्पंत्विति छोटिकामुद्रां॰ तीक्ष्णदंष्ट्रेतिक्षेत्रपालंसंप्रार्थ्य आचम्यप्राणानायम्य ममसकुटुंबस्यक्षे
मस्थैर्यविजयाभयआयुरारोग्यैश्वर्याभिवृद्ध्यर्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थंश्रीसंकटहरणगणेश्वरप्रीत्यर्थंनारदीयपुरा-
णोक्तप्रकारेणपुरुषसूक्तविधानेनयथासंभावितनियमेनयथोपचारमीलितद्रव्यैः संकष्टचतुर्थीव्रतांगत्वेनगणपतिपूजनमहंकरिष्ये
कलशार्चनंशंखार्चनंचकुर्यात् अथन्यासंकुर्यात् अस्यश्रीगणपतिमंत्रस्यशुक्लऋषिः श्रीसंकष्टहरणगणपतिर्देवता अनुष्टु
प्छंदः श्रीसंकष्टहरणगणपतिप्रीत्यर्थेन्यासेविनियोगः ॐ नमोहेरंबअंगुष्ठाभ्यांनमः मदमोदिततर्जनीभ्यांनमः ममसंकष्टंनि
वारयमध्यमाभ्यां॰ निवारयअनामिकाभ्यांनमः हुंफट्कनिष्ठिकाभ्यांनमः स्वाहा करतलकरपृष्ठाभ्यांनमः एवंहृदयादि भूर्भुवःस्व
रोमितिदिग्बंधः ॐनमोहेरंबमदमोदितममसंकटंनिवारयनिवारयहुंफट्स्वाहा॰ अथध्यानं श्वेतांगंश्वेतवस्त्रंसितिकुसुमगणैःपूजि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तंश्वेतगंधैः क्षीराब्धे रत्नदीपे स्फुरतरुविमले रत्नसिंहासनस्थं दोर्भिः पाशांकुशेष्टाभयधृतरुचिरं चंद्रमौलिं त्रिनेत्रं ध्यायेच्छांत्यर्थ-
मीशं गणपतिममलं श्रीसमेतं प्रसन्नं लंबोदरं चतुर्बाहुं त्रिनेत्रं रक्तवर्णकं सर्वाभरणशोभाढ्यं प्रसन्नास्यं विचिंतयेत् ध्यायामि आ
गच्छ विघ्नराजेंद्र स्थाने चात्र स्थितो भव आराधयिष्ये भक्त्याहं भवंतं सर्वसिद्धये सहस्रशीर्षेत्यावा० गणेशाय० आवा० अभीप्सि
तार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः पुरुषएवेदमासनं विघ्ननाशिने नमः आसनं गणाधि
पनमस्ते स्तु सर्वसिद्धिकर प्रभो पाद्यं गृहाण देवेश सुरासुरसुपूजित एतावानस्य० लंबोदराय० पाद्यं रक्तगंधाक्षतोपेतं रक्तपुष्पस
मन्वितं अर्घ्यं गृहाण देवेश मया दत्तं हि भक्तितः त्रिपादूर्ध्व० चंद्रार्धधारिणे न० अर्घ्यं सुरासुरसमाराध्य सर्वसिद्धिप्रदायक
मया दत्तं सुरश्रेष्ठ गृहाणाचमनीयकं तस्माद्विराळ० विघ्नप्रियाय० आचमनीयं पयोदधिघृतं चैव शर्करामधुसंयुतं पंचामृतेन-
स्नपनं करिष्ये सर्वसिद्धिदं यत्पुरुषेणेति स्नानं पंचामृतस्नानं गंगादिसलिलं शुद्धं सुवर्णकलशे स्थितं सुवासितं परिमलैः स्ना
पयामि गणेश्वर पुरुषसूक्तेन शुद्धोदकस्नानं रक्तांबरं वस्त्रयुग्मं सर्वकार्यार्थसिद्धये मया दत्तं गणाध्यक्ष गृह्यतामखिलार्थद
तं यज्ञं० सर्वप्रदाय० वस्त्रयुग्मं कुंकुमाक्तं मया दत्तं सौवर्णमुपवीतकं उत्तरीयेण संयुक्तं गृहाण गणनायक तस्माद्यज्ञात्स० सं
भृ० वक्रतुंडाय० यज्ञोपवीतं० चंदनागरुकर्पूरकुंकुमादिसमन्वितं गंधं गृहाण देवेश सर्वसिद्धिप्रदायक तस्माद्यज्ञा० ऋच० गणा-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ध्यक्षाय॰ गंधं॰ अक्षताश्च सुरश्रेष्ठ कुंकुमोक्ताः सुशोभनाः गृहाण विघ्नराजेंद्र मया दत्ता हि भक्तितः गजवदनाय॰ अक्षतान् रक्तपुष्पा
णि विघ्नेश एकविंशति संख्यया गृहाण सुमुखो भूत्वा मया दत्तान्युमासुत तस्मा दस्मा॰ गुणशालिने॰ पुष्पाणि॰ सुगंधीनि च माल्या
नि गृहाण गणनायक॰ विनायक नमस्तुभ्यं शिवसूनो नमोस्तु ते विघ्ननाशिने॰ माल्यानि एकविंशतिनामभिः दूर्वाभिः पूजयेत् ॐ गजा
ननाय नमः विघ्नराजाय॰ लंबोदराय॰ शिवात्मजाय॰ वक्रतुंडाय॰ शूर्पकर्णाय॰ कुब्जाय॰ गणेशाय॰ विघ्ननाशिने॰ विकटाय॰ वाम
देवाय॰ सर्वदेवाय॰ सर्वार्तिनाशिने॰ विघ्नहर्त्रे॰ धूम्राय॰ सर्वदेवाधिदेवाय॰ उमापुत्राय॰ कृष्णपिंगलाय॰ भालचंद्राय॰ गणाधि
पाय॰ एकदंताय॰ २१ एकविंशति दूर्वापुष्पाणि समर्पयामि अथांगपूजा संकष्टनाशिने नमः पादौ पूजयामि स्थूलजंघाय॰
जंघे॰ एकदंताय॰ जानुनी पू॰ आखुवाहनाय॰ ऊरू पू॰ हेरंबाय॰ कटी पू॰ लंबोदराय॰ उदरं पू॰ गणाध्यक्षाय॰ हृदयं पू॰ स्थूलकं
ठाय॰ कंठं पू॰ स्कंदाग्रजाय॰ स्कंधौ पू॰ परशुहस्ताय॰ हस्तौ पू॰ गजवक्त्राय॰ वक्त्रं पू॰ सर्वेश्वराय॰ शिरः पू॰ संकष्टनाशिने॰ सर्वा
गं पू॰ अथावरणपूजा गणाधिपाय॰ उमापुत्राय॰ अघनाशिने॰ हेरंबाय॰ लंबोदराय॰ गजवक्त्राय॰ एकदंताय॰ धूम्रकेतवे॰
भालचंद्राय॰ ईशपुत्राय॰ इभवक्त्राय॰ मूषकवाहनाय॰ कुमारगुरवे॰ संकष्टनाशिने॰ इति प्रथमावरणं विघ्नगणपतये॰ वीरग
णपतये॰ शूर्पकर्णगणपतये॰ प्रसादगणपतये॰ वरदगणपतये॰ इंद्रगणपतये॰ एकदंतगणपतये॰ लंबोदरगणपतये॰ क्षिप्रग

कुमारगुरुसेनमः नाभिं पू॰

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

णपतये॰ सिद्धिगणपतये॰ इति द्वितीयावरणं २ रामाय॰ रमेशाय॰ शशांकाय॰ रतिप्रियाय॰ पुष्पबाणाय॰ महेश्वराय॰ वराहाय॰ श्री
सदाशिवाय॰ तृतीयावरणं ३ आदित्याय॰ चंद्राय॰ कुजाय॰ बुधाय॰ बृहस्पतये॰ शुक्राय॰ शनैश्चराय॰ केतवे॰ सिद्ध्यै॰ समृद्ध्यै॰ कां
त्यै॰ मदनरत्यै॰ मदद्राविण्यै॰ वसुमत्यै॰ वैनायक्यै चतुर्थावरणं ४ इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ सोमाय॰ ई
शानाय॰ पंचमावरणं ५ अथ पत्रपूजा गणाधिपाय॰ पाचीपत्रं॰ सुमुखाय॰ भृंगराजपत्रं॰ उमापुत्राय॰ बिल्वपत्रं॰ गजवक्त्राय॰ श्वेत
दूर्वापत्रं॰ लंबोदराय॰ बदरीपत्रं॰ हरसूनवे॰ धत्तूरपत्रं॰ गुहाग्रजाय॰ तुलसीपत्रं॰ गजकर्णाय॰ अपामार्गपत्रं॰ एकदंताय॰ बृहतीपत्रं॰ इ
भवक्त्राय॰ शमीपत्रं॰ मूषकवाहनाय॰ करवीरपत्रं॰ विनायकाय॰ वेणुपत्रं॰ कपिलाय॰ अर्कपत्रं॰ भिन्नदंताय॰ अर्जुनपत्रं॰ पत्नीसहि-
ताय॰ विष्णुक्रांतपत्रं॰ वटवे॰ दाडिमीपत्रं॰ भालचंद्राय॰ देवदारुपत्रं॰ हेरंबाय॰ मरुतपत्रं॰ सिद्धिदाय॰ सिंदूरपत्रं॰ स्कंदाग्रजाय॰ जातीप॰ वि
घ्नराजाय॰ केतकीप॰ इत्येकविंशतिपत्राणि अथ पुष्पपूजा सुमुखाय॰ जातीपुष्पं॰ एकदंताय॰ शेवंतीपु॰ कपिलाय॰ यूथिकापु॰ गजक
र्णाय॰ चंपकपु॰ लंबोदराय॰ कल्हारपु॰ विकटाय॰ केतकीपु॰ विघ्ननाशिने॰ बकुलपु॰ विनायकाय॰ जपाकुसुमपु॰ धूम्रकेतवे॰ पुन्नागपु॰
गणाध्यक्षाय॰ धत्तूरपु॰ भालचंद्राय॰ मातुलिंगपु॰ पत्नीसहिताय॰ विष्णुक्रांतापु॰ उमापुत्राय॰ करवीरपु॰ गजाननाय॰ पारिजातकपु॰
ईशपुत्राय॰ कमलपु॰ सर्वसिद्धिप्रदाय॰ गोकर्णिकापु॰ मूषकवाहनाय॰ कुमुदपु॰ कुमारगुरवेन॰ नगरपु॰ दीर्घशुंडाय॰ स्कंदाधिराज





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पु० इभवक्त्राय० अगस्तिपु० संकष्टनाशनाय० पाटलापु० इत्येकविंशतिपुष्पाणि २१ अथाष्टोत्तरशतनामपूजा ॐ अस्य श्रीअष्टो
त्तरशतविघ्नेश्वरदिव्यनामामृतस्तोत्रमंत्रस्य गृत्समदऋषिः गणपतिर्देवता अनुष्टुप्छंदः गंबीजं नंशक्तिः मंकीलकं श्रीगणपतिप्रसा
दसिद्ध्यर्थं पूजने वि० ॐकारपूर्वकनामानि विनायकाय० विघ्नराजाय० गौरीपुत्राय० गणेश्वराय० स्कंदाग्रजाय० अव्ययाय० पूताय०
दक्षाध्यक्षाय० द्विजप्रियाय० अग्निगर्वच्छिदे० इंद्रश्रीप्रदाय० वाणीबलप्रदाय० सर्वसिद्धिप्रदाय० शर्वतनयाय० शर्वप्रियाय० सर्वात्म-
काय० सृष्टिकर्त्रे० देवानीकार्चिताय० शिवाय० शुद्धाय० बुद्धिप्रियाय० शांताय० ब्रह्मचारिणे० गजाननाय० द्वैमातुराय० मुनिस्तुत्याय० भ
क्तविघ्ननाशिने० एकदंताय० चतुर्बाहवे० शक्तिसंयुताय० चतुराय० लंबोदराय० शूर्पकर्णाय० हेरंबाय० ब्रह्मवित्तमाय० कालाय० ग्रहपत
ये० कामिने० सोमसूर्याग्निलोचनाय० पाशांकुशधराय० चंडाय० गुणातीताय० निरंजनाय० अकल्मषाय० स्वयंसिद्धाय० सिद्धार्चित
पदांबुजाय० बीजपूरकाय० अव्यक्ताय० वरदाय० शाश्वताय० कृतिने० विद्वत्प्रियाय० वीतभयाय० गदिने० चक्रिणे० इक्षुचापधृते०
अब्जोत्पलकराय० श्रीशाय० श्रीपतये० स्तुतिहर्षिताय० कुलाद्रिभृते० जटिने० चंद्रचूडाय० अमरेश्वराय० नागयज्ञोपवीतिने० श्रीकंठाय
न० रामार्चितपदाय० व्रतिने० स्थूलकंठाय० त्रयीकर्त्रे० सामघोषप्रियाय० पुरुषोत्तमाय० स्थूलतुंडाय० अग्रगण्याय० ग्रामण्याय० ग
णपाय० स्थिराय० वृद्धिदाय० सुभगदाय० शूराय० वागीशाय० सिद्धिदायकाय० दूर्वाबिल्वप्रियाय० कांताय० पापहारिणे० कृताग-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र॰ रा॰
८५

माय॰ समाहिताय॰ वक्रतुंडाय॰ श्रीपदाय॰ सौम्याय॰ भक्तकांक्षितदात्रे॰ अच्युताय॰ केवलाय॰ सिद्धिदाय॰ सच्चिदानंदविग्रहाय॰ ज्ञानि
ने॰ मायायुक्ताय॰ दांताय॰ ब्रह्मिष्ठाय॰ भयवर्जिताय॰ १००॰ प्रमत्तदैत्यभयप्रदाय॰ व्यक्तमूर्तये॰ अमूर्त्तकाय॰ पार्वतीशंकरोत्संगखेलनो-
त्सवलालसाय॰ समस्तजगदाधाराय॰ वरदमूषकवाहनाय॰ हृष्टचित्ताय॰ प्रसन्नात्मने॰ सर्वसिद्धिप्रदायकाय॰ १०८ अष्टोत्तरशतेनैवंना
म्नाविघ्नेश्वरस्यच तुष्टावशंकरःपुनंत्रिपुरंहंतुमुद्यतः यःपूजयेदनेनैवभक्त्यासिद्धिविनायकं दूर्वादलैर्बिल्वदलैःपुष्पैर्वाचंदनाक्षतैः
सर्वान्कामानवाप्नोतिसर्वापद्भ्यःप्रमुच्यते इतिश्रीभविष्योत्तरपुराणेविघ्नेश्वराष्टोत्तरशतदिव्यनामस्तोत्रंसंपूर्णं वनस्पतिरसोद्भूतंद-
शांगंगुग्गुलान्वितं गृहाणसर्वकामार्थंमयादत्तंविनायक यत्पुरुषं॰ उमापुत्राय॰ धूपं॰ घृताक्तवर्तिसंयुक्तंदीपंशक्तिप्रदायकं गृहा
णेशमयादत्तंतेजोराशेजगत्पते ब्राह्मणोस्य॰ रुद्रप्रियाय॰ दीपं॰ अन्नंचतुर्विधं॰ ह्येतां भक्ष्यैर्नानाविधैर्युक्तान् मोदकान् घृतपाचि
तान् गृहाणविघ्नराजेंद्र तिललड्डुसमन्वितान् चंद्रमामन॰ विघ्ननाशिने॰ नैवेद्यं॰ फलानीमानिरम्याणिस्थापितानितवाग्रतः ते-
नमेसफलावाप्तिर्भवेज्जन्मनि॰ जन्मनि संकष्टनाशिने॰ फलंस॰ पूगीफलंमहद्दिव्यं॰ नाभ्याआसी॰ सिद्धिविना॰ तांबूलं॰ श्रियेः
जातइतिनीराजनं॰ पूजाफलसमृद्ध्यर्थंतवाग्रेस्वर्णमीश्वर स्थापितंतेनमेप्रीतःपूर्णान्कुरुमनोरथान् सप्तास्यास॰ विघ्नेशाय॰ स्व
र्णपुष्पं॰ अथदूर्वा गणाधिपाय॰ दूर्वायुग्मंस॰ उमापुत्राय॰ दूर्वायु॰ अघनाशनाय॰ दूर्वा॰ एकदंताय॰ दूर्वायुग्मं॰ इभवक्त्राय॰ दूर्वायु॰ विना

व॰
४
८५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यकाय॰ दूर्वायु॰ ईशपुत्राय॰ दूर्वायु॰ सर्वसिद्धिप्रदायकाय॰ दूर्वा॰ कुमारगुरवे॰ दूर्वायु॰ श्रीगणेश्वराय॰ एकदूर्वांकुरं समर्प॰
गणाधिप नमस्तेस्तु उमापुत्राघनाशन एकदंतेभवक्त्रेति तथा मूषकवाहन विनायकेशपुत्रेति सर्वसिद्धिप्रदायक कुमारगुरवे तुभ्यं
गणराज प्रयत्नतः एभिर्नामपदैर्नित्यं दूर्वायुग्मं समर्पयेत् श्रीगणेशो वक्रतुंड उमापुत्रस्तथैव च विघ्नराजः कामदश्च गणेश्वर इति स्मृतः
जीमूतः शक्तिरित्युग्रस्तथा जनसमप्रभः योगिध्येयो दिव्यगुणो महाकाय इतीरितः ततश्च सिद्धिदः प्रोक्तो महोदर इति स्मृतः गज
वक्त्रः कर्मभीमस्ततः परशुधार्यपि करिकुंभो विश्वमूर्तिरुग्रतेजास्ततः परं लंबोदरस्ततः सिद्धिर्गणेशश्चैकविंशतिः नामानि रमणी
यानि जपेदेभिश्च पूजयेत् गणेशानस्य नश्यंति संकटानि महांत्यपि महासंकष्टदग्धोहं गणेशं शरणं गतः तस्मान्मनोरथं पूर्णं कुरु विश्वे
श्वरप्रिय ततः स्वर्णमयं पुष्पं विघ्नेशाय निवेदयेत् प्रदक्षिणा नमस्कारान् कृत्वा देवं क्षमापयेत् यज्ञेन यज्ञ॰ संकष्टनाशनाय॰ पुष्पां
जलिं॰ नमोस्तु देवदेवेश भक्तानामभयप्रद विघ्नानां नाशकर्त्रे च हरात्मज नमोस्तु ते विघ्ननाशिने॰ नमस्कारं॰ ततः ॐ नमो हेरंब इति
मूलमंत्रं एकविंशतिवारं जपेत् अथ गणेशायार्घ्यं दद्यात् गणेशाय नमस्तुभ्यं सर्वसिद्धिप्रदायक संकष्टहर मे देव गृहाणार्घ्यं नमोस्तु
ते संकष्टहरगणप॰ इदम॰ सम॰ कृष्णपक्षे चतुर्थ्यां तु संपूजित विधूदये क्षिप्रं प्रसीद देवेश गृहाणार्घ्यं नमोस्तु ते एताभ्यां मंत्राभ्यां
अर्घ्यं दद्यात् तिथिनामुत्तमे देवि गणेशप्रियवल्लभे सर्वसंकष्टनाशाय गृहाणार्घ्यं नमोस्तु ते चतुर्थ्यै नमः इदमर्घ्यं॰ रोहिणीसहितचंद्रं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पंचोपचारैः पूजयेत् क्षीरोदार्णवसंभूतलक्ष्मीबंधो निशाकर गृहाणार्घ्यं मयादत्तं रोहिण्यासहितः शशीन् इतिगणेशायभिरर्घ्यं २
गगनांगणसंदीपक्षीराब्धिमथनोद्भव भाभासितदिगंतांत सोमराजनमोस्तुते चंद्रायनमस्कारः ततःआचार्यंपूजयेत् वायनंदद्यात्
मोदकान्सफलान् पंचदक्षिणाभिः समन्वितान् गृहाणत्वंद्विजश्रेष्ठव्रतस्यपरिपूर्तये वायनमं॰ प्रतिमादानमंत्रः प्रतिमांगुरवेदद्यादा-
चार्यायसदक्षिणां वस्त्रकुंभसमायुक्तामादौमंत्रमिमंजपेत् गणेशस्यप्रसादेनममसंतुमनोरथाः तुभ्यंसंप्रददेविप्रप्रतिमांतुगजान
नीं इष्टकामार्थसिद्ध्यर्थंपुत्रपौत्रप्रवर्धिनीं गणाधिराजदेवेशाविघ्नराजविनायक नवमूर्तिप्रदानेनप्रसन्नोभवसर्वदा इतिकल
शप्रतिमादानमंत्रः अथप्रतिग्रहमंत्रः गणेशःप्रतिगृण्हातिगणेशोवैददातिच गणेशस्तारकोभाभ्यांगणेशायनमोनमः सं
सारपीडाव्यथितंहिमांसदासंकष्टभूतंस्सुमुखप्रसीद त्वंत्राहिमांनाशयकष्टसंघान्नमोनमःकष्टविनाशनाय इतिप्रार्थना यदुद्दि
श्यकृतंतेद्यययथाशक्तिप्रपूजनं संकष्टहरमेदेवउमासूतनमोस्तुते इतिनमस्कारः इतिपूजाविधिः अथकथा सूतउवाच
अरण्येवर्तमानंतं पांडुपुत्रंयुधिष्ठिरं सबांधवंस्सुखवासीनंग्रयंयोव्यासआदरात् तंदृष्ट्वामुनिशार्दूलंव्यासंप्रत्यायथोनृपः मधु
पर्कंचसार्ध्यंचकृत्वातस्मैत्युवाचतं युधिष्ठिरउवाच अद्यमेसफलंजन्मभवतागमनेकृते येसंकष्टाहिसंजातावनेममनिवासि
नः तेसर्वेविलयंयाताभवतादर्शनेनहि आत्मानंसाधुमन्येहंराज्यतृष्णापराङ्मुखं दुःखितंमांकथंस्वामिन्राज्यभ्रष्टंवनेस्थित ए



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नेभीमादयः सर्वे बांधवाव्यथयंतिभो दुराधर्षाः स्ववीर्याहि मच्छासनविधौरताः इयंतुद्रौपदीसाध्वी राजपुत्री पतिव्रता राज्योपभोगयोग्यासा
प्यद्यदुःखोपभोगिनी मयाचकिंकर्तव्यासपूर्वं कष्टानुजीविता दायादैर्वंचितैराज्यंद्यूतच्छद्मरतैःस्तथा पराजितावयंब्रह्मन् स्वस्त्हद्भिर्बं-
धुभिस्तथा वनंप्रस्थापितादूतैरिदमूचुस्तथैवच कुर्वंतुगमनंशीघ्रंवनायभवदादयः इत्थंनिराकृताःस्वामिन्यदातद्वनमागताः अहंत
दाप्रभृत्याहीनद्दस्याभिभवादृशान् यद्यस्तिव्रतमेकंहिसर्वसंकष्टनाशनं तद्व्रतंकथयब्रह्मन्ननुग्राह्योस्मिस्वव्रत इत्युक्त्वंतंराज.
नंसर्वसंकष्टनाशनं उवाचप्रीणयन्व्यासो धर्मजंमेदिनीपतिं व्यासउवाच नास्तिभूमंडलेराजंस्त्वत्समोधर्मतत्परः कथयामिव्रतंते
द्यव्रतानामुत्तमोत्तमं संकष्टनाशनंनित्यंशुभदंफलदंभुवि यत्कृत्वासर्वकार्याणांनिष्पत्तिर्जायतेध्रुवं विद्यार्थीलभतेविद्यांधनार्थीलि
भतेधनं प्रोषितायापुरंध्रीचकरोतिव्रतमुत्तमं ईप्सितंलभतेसर्वं पतिनासहमोदते संकष्टेपियदाक्षिप्तोमानवोग्रहपीडितः साम्राज्ये
दीक्षितोनित्यंमंत्रिभिःपरिवारितः सुहृद्भिर्बंधुभिश्चैवतथापुत्रैःसमन्वितः तस्यतुप्रियकर्त्रीचपत्नीगुणवतीप्रिया नाम्नारत्नाव-
लीत्यासीत्पतिव्रतपरायणा तयोःपरस्परंप्रीतिरभवच्चगुणाश्रयी कदाचिद्दैवयोगेनहृतराज्यंचवैरिभिः कोशोबलंचापहृतं
विध्वस्तोबंधुभिःसह रत्नावल्यातयासाध्व्यानिर्गतोभूमिवल्लभः वनेक्षुधार्तःभ्रमितोह्येकवासास्तृषार्दितः इतस्ततश्चरन्रा-
जन्नातपेनातिपीडितः एकाकीवनमासाद्यतयासार्द्धंयुधिष्ठिर सूर्येचास्ताचलंयातेअरण्येचशिवादिने व्याघ्राश्चचुक्रुशुस्तत्र

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पर्जन्योपिववर्षेह कंटकैःक्लेशिताराज्ञीदुःखमाक्रंदपीडिता तांविलोक्यनृपश्रेष्ठोदुःखेनैवतुपीडितः ततःप्रभातसमयेमार्कंडेयंमहामु
निं ददर्शराजातत्रैवविस्मयाविष्टमानसः उपगम्यशनैस्तंतुदंडवत्पतितोभुवि अब्रवीद्वचनंराजामार्कंडेयंमहामुनिं किंकृतंहिमया-
स्वामिन्दुष्कृतंकथयस्वतत् केनकर्मविपाकेनराज्यलक्ष्मीःपराङ्मुखी मार्कंडेयउ॰ शृणुराजन्प्रवक्ष्यामियत्त्वयापूर्वजन्मनि पूर्वंहि
लुब्धकश्चासीद्गतोसिगहनंवनं मृगशार्दूलशशकान्हन्यमानोवनेतदा तस्मिन्रात्रौभ्रमन्राजन्चतुर्थ्यांमाघकृष्णके दृष्टंशुभंचकृष्णा
यास्तडागंपृथुनिर्मलं तत्तीरेनागकन्यानांसमूहंरक्तवाससां गणेशंपूजयंतीनांदृष्टवान्नियमव्रतं उपगम्यशनैस्तत्रपृष्टंतासांत्वयावि
भो आर्याःकिमेतन्मेसर्वंकथयध्वंहितत्त्वतः नागकन्याऊचुः पूजयामोगणपतिंव्रतंसिद्धिप्रदायकं शांतिदंपुष्टिदंनित्यंसर्वव्याधि
विनाशनं पुनःपृष्टंत्वयातत्रकिंदानंपूज्यतेत्रकः स्त्रियऊ॰ यदाचोत्पद्यतेभक्तिर्मासिपूज्योगणाधिपः कृष्णायांचचतुर्थ्यांवैरक्तपुष्पैः
प्रपूजयेत् धूपैर्दीपैश्चनैवेद्यैरन्यैर्भक्तिसमन्वितैः विविधान्मोदकान्कृत्वापूरिताघृतपाचिताः नैवेद्यंषड्रसंसर्वंगणेशायनिवेदयेत्
ततोगृहीतंराजेंद्रत्वयासंकष्टनाशनं अभवद्धनधान्यंतेपुत्रपौत्रसमन्वितं कस्मिंश्चित्समयेराजन्धनमत्तेनसिद्धिदं विस्मितंतद्व्रतं
सर्वंत्वयायत्नेनभूतिदं ततःमाघेहिपंचत्वंत्वयाप्राणविनाशनं तत्प्रभावाद्राजकुलेविशालेप्राप्तमुत्तमं त्वयाजन्मनृपश्रेष्ठराज्यंप्रा
प्तंत्वयाविभो कलत्रंमित्रप्रियायुक्तःप्राप्तोसिविपुलंवसु कृतावज्ञाव्रतस्यांतेतत्प्राप्तंफलमीदृशं राजोवा॰ अधुनाक्रियतेस्वामिन्-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कथ्यतांममसद्व्रतं यत्कृत्वासकलंराज्यंप्राप्यतेचमयापुनः ऋषिरुवाच व्रतसंकल्पमाशुत्वंकुरुराजन्नृपोत्तम प्राप्स्यसित्वंहिराज्यंच-
संदेहंमाकुरुप्रभो इत्युक्त्वासमुनिश्रेष्ठोत्वंतर्धानमगात्ततः मुनिस्तद्वचनंश्रुत्वाव्रतसंकल्पमातनोत् राजाराज्ञीमुनिप्रोक्तंसकलंतद्व्रतंशु
भं आयाताःसकलास्तस्यमंत्रिभृत्याश्चसैनिकाः समाययोनृपश्रेष्ठतत्क्षणात्स्वयमेवहि लब्ध्वास्वकीयंराज्यंचगणेशस्यप्रसादतः बु
भुजेमेदिनींराजापुत्रपौत्रसमन्वितः तस्मात्त्वमपिराजेंद्रकुरुसंकष्टनाशनं व्रतंसिद्धिप्रदंनृणांस्त्रीणांचैवविशेषतः युधिष्ठिरउवा०
सविस्तरंव्रतंब्रूहिकृपयाकष्टनाशनं व्यासउवाच यदासंक्लेशितोराजन्दुःखैःसंकष्टदारुणैः पुमान्कृष्णचतुर्थ्यांतुतदापूज्योगणा
धिपः श्रावणेबहुलेपक्षेचतुर्थ्यांतुविधूदये तस्मिन्दिनेव्रतंग्राह्यंसंकष्टाख्यंयुधिष्ठिर निराहारोद्यदेवेशयावच्चंद्रोदयोभवेत् माघेवा
कृष्णपक्षेतुचतुर्थ्यांतुविधूदये तस्मिन्दिनेव्रतंग्राह्यंसंकष्टाख्यंनृपोत्तम प्रातःशुचिर्भवेत्सम्यक्कृदंतधावनपूर्वकं निराहारोद्यदेवेश-
यावच्चंद्रोदयोभवेत् भोक्ष्यामिपूजयित्वाहंगणेशंशरणंगतः एवंसंकल्पमादौतुस्नात्वाशुक्लतिलैःशुभैः आन्हिकंतुविधायैवं-
पूजांचकुरुसद्व्रत यथाशक्त्यातुसौवर्णींप्रतिमांचविधायच सौवर्णेराजतेताम्रेमृन्मयेवाथशक्तितः कुंभेपुष्पैःफलैःपूर्णेदेवंतत्रैव
विन्यसेत् शुभेदेशेन्यसेत्कुंभंवस्त्रंतत्रनिधायच पद्ममष्टदलंकृत्वागंधाद्यैःपूजयेत्ततः रक्तपुष्पैश्चधूपैश्चएभिर्नामपदैःपृथक्
आवाहनंगणेशायआसनंविघ्ननाशिने पाद्यंलंबोदरायेतिअर्घ्यंचंद्रार्धधारिणे विश्वप्रियायाचमनंस्नानंचब्रह्मचारिणे चंदनंरु-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

द्रपुत्रायपुष्पंचगुणशालिने भवानीप्रियकर्त्रेचधूपंदद्याद्यथाविधि दीपंरुद्रप्रियायेतिनैवेद्यंविघ्ननाशिने तांबूलंसिद्धिदायेतिफलंसंक
ष्टनाशिने इतिनामपदैःपूजांकृत्वामासव्रतंशृणु श्रावणेसप्तलड्डुकान्भक्षयेद्दधिभक्षणे आश्विनेचोपवासंचकार्तिकेपयभक्षणं
मार्गेमासिनिराहारःपौषेगोधूमभक्षणं तिलानष्टशतंमाघेफाल्गुनेघृतशर्करां चैत्रमासीपंचगव्यंदूर्वारसंतुमाधवे ज्येष्ठेघृतंपलंभो-
ज्यमाषाढेमधुभक्षणं इतिमासव्रतान्कृत्वानरोमुच्येतसंकटात् भुंजीयाद्वातथासप्तग्रासान्वास्वेच्छयाष्टकंव अशक्तश्चेत्ततःसिद्धिर्भवि
ष्यतिनसंशयः मंत्रेणानेनसंप्रार्थ्यदेवदेवंजगद्गुरुं एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः नानाभक्ष्यादिसंयुक्तमुपहारंप्रकल्पयेत् मोद
कान्कारयेद्राजन्तिलजान्दशसंख्यकान् देवाग्रेस्थापयेत्पंचदद्याद्विप्रायदापयेत् पूजयित्वातुतंविप्रंभक्तिभावेनदेववत् दक्षिणांच
यथाशक्त्यादत्वापंचैवमोदकान् संसारपीडाव्यथितंहिमांसदासंकष्टभूतंसुमुखप्रसीद त्वंत्राहिमांनाशयकष्टसंघान्नमोनमःकष्टवि
नाशनाय इतिसंप्रार्थ्यदेवेशंचंद्रायार्घ्यंनिवेदयेत् ब्राह्मणान्भोजयेत्पश्चाद्गणेशप्रीतयेसदा स्वयंभुंजीतपंचैवमोदकान्बंधुभिःसह
अशक्तौत्वेकमन्नंवाभुंजीयाद्दधिनासह अथवाभोजनंकार्यमेकवारंहिपांडव भूमिशायीजितक्रोधोलोभदंभविवर्जितः प्रतिमांगुरवेद
द्यादाचार्यायनिवेदयेत् गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर व्रतेनानेनसुप्रीतोयथोक्तफलदोभव एवंव्रतंप्रकर्तव्यंचतुर्थ्यांमासकृ
च्छ्रके गाणपत्यंतथाकार्यंसर्वशास्त्रविशारदं आचार्यंवरयेद्दक्षंयथोक्तविधिनार्चयेत् एकविंशतिविप्रान्वैवस्त्रालंकारभूषणैः पू





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जयेद्गोहिरण्याद्यैर्मोदकैश्चैवहोमयेत् अष्टोत्तरसहस्रंतुशतंचाष्टाधिकंतथा अष्टाविंशतिरष्टौवावेदोक्तैस्तिलसर्पिषा सपत्नीकंसुव
र्णाद्यैर्गोभूवस्त्रादिभूषणैः छत्रंचोपानहौदद्यात्कमंडलुगृहादिभिः आचार्यंपूजयेद्राजन्गणेशस्यतुतुष्टये एवंकृत्वाविधानेनप्रस
न्नोनात्रसंशयः प्रतिमासंतुयःकुर्यात्त्रीण्यब्दान्येकमेववा अथवाजन्मपर्यंतंतस्यदुःखंकदाचन दारिद्र्यंनभवेत्तस्यसंकष्टंनभवेदिह
वत्सरांतेद्वादशाग्र्यान्ब्राह्मणान्भोजयेत्ततः विद्यार्थीलभतेविद्यांधनार्थीलभतेधनं पुत्रार्थीलभतेपुत्रान्सौभाग्यंचसुवासिनी शृ
ण्वंतियेव्रतमिदंशुभमीदृशंहितंवैसुखंभुविमनोव्रतपूर्णकामाः नित्यंभवंतिललनाःपुरुषाःस्त्रियन्यस्तेपुत्रपौत्रधनधान्ययुताःपृथि
व्यां एवमुक्त्वाततोव्यासस्तत्रैवांतरधीयत युधिष्ठिरस्तुतत्सर्वमकरोद्राजसत्तमः तेनव्रतप्रभावेनस्वराज्यंप्राप्तवान्नृपः हत्वारिपून्कु
रुक्षेत्रेस्वराज्यमलभन्नृपः इतिश्रीनारदीयपुराणेकृष्णचतुर्थीसंकष्टहरव्रतंसंपूर्णं अथअंगारकचतुर्थीव्रतंलिख्यते इंद्रउवाच
अंगारकचतुर्थ्यांचविशेषोविहितःकुतः वदमेकृपयाब्रह्मन्प्रश्रयान्वियमेनच शृण्वतोनचमेतृप्तिर्गजाननकथांशुभां ब्रह्मोवाच अं
गारकचतुर्थ्यांतुमहिमानंमहीपते शृणुष्वावहितोभूत्वाकथयामितवाग्रतः अवंतीनगरेराजन्भरद्वाजोमहामुनिः वेदवेदांगविद्प्राज्ञःसर्व
शास्त्रविशारदः अग्निहोत्ररतोनित्यंशिवध्यानेचतत्परः नदीतीरेगतोतिष्ठन्ननुष्ठानरतोमुनिः अकस्मात्कामिनींदृष्ट्वाकामासक्तोभवन्मु
निः कामबाणाभिभूतःसन्निपपातमहीतले अतिविह्वलगात्रस्यतस्यरेतस्तदास्खलत् प्रविष्टंतस्यतद्रेतःपृथिवीबिलमध्यतः ततएकः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कुमारो भूर्जपाकुसुमसन्निभः तं धरित्री स्नेहवशात्पालयामास सादरं जनुः स्वं तेन धन्यं समन्यत पितरौ कुलं ततः स सप्तवर्षस्तां पप्रच्छ जन-
नीं निजां महितो हि कथं मातर्मानुषं देहमास्थितः कश्च मे जनको मातस्तन्मामाचक्ष्व सांप्रतं धरोवाच भरद्वाजमुनेरेतः स्खलितं मयि संगतं
ततो जातोसि रे पुत्र वर्धितोसि मया शुभं सूत उवाच तर्हि तं मे मुनिं मातर्दर्शयस्व तपोनिधिं ब्रह्मोवाच तमादाय तदा देवी भरद्वाजं जगाम
ह धरोवाच भरद्वाजं नमस्कृत्य तद्वीर्यप्रभवं सुतं वर्धितं तं पुरो धाय स्वीकुरुष्व मुनेऽधुना तदाज्ञया ययौ धात्री स्वधाम रुचिरं तदा भरद्वा
जः सुतं लब्ध्वा मुमुदे चालिलिंगतं आघ्राय शिर उत्संगे स्थापयामास तं मुदा मुहूर्ते शुभलग्ने च चकारोपनयं मुनिः वेदशास्त्राण्युपा
दिश्य गणेशस्य मनुं शुभं उवाच कुर्वनुष्ठानं गणेशप्रीतये चिरं संतुष्टो दास्यते कामान् सर्वांस्तव मनोगतान् ततो मंदाकिनीतीरे प्रययास
न गतो मुनिः सन्नियम्येंद्रियाण्याशु ध्यायन् हेरंबमंतरे जजाप परमं मंत्रं वायुभक्षो भृशं मुनिः एवं वर्षसहस्रं स तपस्तेपे सुदारुणे मा
घकृष्णाचतुर्थ्यां तमुदये शशिनः शुभे दर्शयामास स्वं रूपं गणनाथो यदि भुजं दिव्यांबरं भालचंद्रं नानालंकारमंडितं ददर्श सूर्यसंका-
शं स बालः पुरतः स्थितं उत्थाय प्रणिपत्यैनं तुष्टाव जगदीश्वरं नमस्ते विघ्ननाशाय नमस्ते विघ्नकारिणे सुरासुरशिरोरत्न सर्वशक्त्युपबृंहिणे
निरामयाय देवाय निर्गुणाय गुणच्छिदे नमो ब्रह्मविदां श्रेष्ठ स्थितिसंहारकारिणे नमस्ते जगदाधार नमस्त्रैलोक्यपालक दयानिधे ब्र
ह्मविदे ब्रह्मणे ब्रह्मरूपिणे लक्ष्यालक्ष्यस्वरूपाय दुर्लक्षणाछिदे नमः इति स्तुतः प्रसन्नात्मा परमात्मा गजाननः उवाच श्लक्ष्णया वाचा व



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रंयान्वयबालकं एवमुक्तोभूमिपुत्रस्ततऊचेगजाननं भौमउवाच धन्यौतातौममहिजननंदर्शनात्तेसुरेशधन्यंज्ञानंकुलमपितयोर्येन
दृष्टोसिसाक्षात् धन्यावाणीवसतिमयियापादपद्मेनभक्तिर्जातोसितंवरदस्तुभोभक्तिभावेनदेव यदितुष्टोसिदेवेशस्वर्गेभवतुमे-
स्थितिः अमृतंपातुमिच्छामिदेवैःसहगजानन कल्याणकारिमेनामख्यातिमेतुजगत्त्रये दर्शनंमेचतुर्थ्यांयज्जायतेपुण्यदंविभो अतः
सापुण्यदानित्यंसर्वसंकष्टहारिणी कामदाव्रतकर्तॄणांत्वत्प्रसादात्सुरेश्वर गजाननउ० अमृतंप्राप्स्यसेसम्यग्देवैःसहधरासुत मं
गलेतिचनाम्नात्वंलोकेख्या[illegible]गमिष्यसि अंगारकेतिरक्तत्वाद्वसुमत्यायतःसुतः अंगारकचतुर्थींयेकरिष्यंतिनराभुवि तेषामब्दभवंपुण्यं
संकष्टीव्रतसंभवं निर्विघ्न[illegible]र्वकार्येभविष्यत्तिनसंशयः अवंतीनगरेराजाभविष्यतिपरंतपः व्रतानामुत्तमंयस्मात्कृतंमेव्रतमुत्तमं
यस्यसंकीर्तनान्मर्त्यःसर्वकामानवाप्नुयात् इतिदत्वावरान्देवोंतर्दधेद्विरदाननः ततस्तुमंगलोदेवंस्थापयित्वाप्रयत्नतः शुंडामुखंदश
भुजंसर्वावयवसुंदरं प्रासादंकारयामासगजाननमुदावहं संज्ञांमंगलमूर्त्तिंचदेवदेवस्यसाकरोत् ततोभवत्कामदंतत्क्षेत्रंसर्वजनस्यय
त् अनुष्ठानात्पूजनाच्चदर्शनात्सर्वमोक्षदं ततोविनायकोदेवोविमानवरमुत्तमं प्रेषयामासस्वगणान्भौमंमानेनमंतिके तेगत्वातेनदे
हेनभौममानीतवांस्तदा गणेशस्यांतिकंराजन्तदद्भुतमिवाभवत् ततोभौमोभवत्ख्यातस्त्रैलोक्येसचराचरे यतोभौमेनसंकष्टचतु
र्थीभौमसंयुता कृत्वाप्रापयथास्वर्गेसुधापानंसुरैःसह अतश्चांगारकयुताचतुर्थीप्रथिताभुवि चिंतितार्थप्रदानेनचिंतामणिरिव

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र·रा·
५०

प्रिया भयातोमंगलमूर्तिः सर्वानुग्रहकारकः परिणेतुंसनगरात्पश्चिमेप्रथितोभवत् चिंतामणिइतिख्यातः सर्वविघ्ननिवारणः अतः स
सिद्धगंधर्वैः पूज्यतेसविधूद्ये ददातिवांछितानर्थान्पुत्रपौत्रादिसंपदः इतिश्रीगणेशपुराणेब्रह्मेंद्रसंवादेअंगारकचतुर्थीव्रतंसंपूर्णं
अथपंचमीव्रतानिलिख्यंते अथचैत्रशुक्लपंचमीकल्पादि चैत्रेमासिसितेपक्षेपंचम्यांपूजयेद्धरिं तत्रदोलोत्सवंकुर्यात्पुष्पधूपैश्चपूजयेत्
नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः स्रक्चंदनसमायुक्तान्ब्राह्मणान्भोजयेत्ततः इतिहेमाद्रौभविष्ये अथश्रावणशुक्लपंचमीनागपू
जायांपरा पंचमीनागपूजायांकार्याषष्ठीसमन्विता तस्यांतुतुषितानागाइतरासचतुर्थिका अथनागपंचमीव्रतंहेमाद्रौप्रभासखंडे
ईश्वरउवाच श्रावणेमा[illegible]पंचम्यांशुक्लपक्षेतुपार्वती द्वारस्योभयतोलेख्यागोमयेनविषोल्बणाः सातुपुण्यतमाप्रोक्तादेवानाम
पिदुर्लभा कुर्याद्द्वादशवर्षा[illegible]पंचम्यांचवरानने चतुर्थ्यामेकभक्तंतुतस्यांनक्तंप्रकीर्तितं भूरिचंद्रमयंनागमथवाकलधौतजं कृत्वा
दारुमयंवापिअथवामृन्मयंप्रिये हरिद्राचंदनेनैवपंचसर्पांस्तुलेखयेत् पंचम्यामर्चयेद्भक्त्यानागाःपंचफणाःस्मृताः पूजयेद्विधिव
त्क्षीरेलाजपंचामृतैःसह करवीरैःशतपत्रैर्जातीपुष्पैश्चपद्मकैः तथागंधादिधूपैश्चपूजयेन्नागपंचकं ब्राह्मणान्भोजयेत्पश्चा
द्घृतपायसमोदकैः अनंतंवासुकिंशेषंपद्मंकंबलमेवच तथाकर्कोटकंनागभुजंगाश्वतरस्तथा धृतराष्ट्रंशंखपालंकालीयंतक्ष-
कंतथा पिंगलंचमहानागंमासिमासिप्रकीर्तिताः व्रतस्यांतेपारणंस्यात्क्षीरैर्ब्राह्मणभोजनैः सुवर्णभारनिष्पन्नंनागंदद्याच्चगांत

च

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

था तथावस्त्राणिदेयानिव्यासायामिततेजसे एवंसंपूजयेन्नागान्सदाभक्त्यासमन्वितः विशेषतस्तुपंचम्यांपयसापायसेनच
दिवारात्रौनरैस्तत्रमेदिनीखननंनहि इतिप्रभासखंडेनागपंचमीव्रतं अत्रैवनागदष्टव्रतं हेमाद्रौभविष्योत्तरपुराणे सुमंतुउ॰
नागदष्टोनरोराजन्प्राप्यमृत्युंव्रजत्यधः अधोगत्वाभवेत्सर्पोनिर्विषोनात्रसंशयः शतानीकउ॰ नागदष्टःपितायस्यभ्रातावादुहि
तापिच मातापुत्रोथवाभार्याकर्तव्यंतद्वदस्वमे मोक्षायतस्यविप्रेंद्रदानव्रतमुपोषणं ब्रूहिमेद्विजशार्दूलयद्भवेत्तत्करोम्यहं सुमंतुउ॰
उपोष्यापंचमीसम्यक्नागानांबलवर्धिनी सुमेकमेकंयावच्चविधानंशृणुभारत सुमेकंसंवत्सरंउपोष्येतिदिवाभोजनाभावः त-
स्यांनक्तमित्यग्रेनक्तोक्तेः श्रावणेमासिपंचम्यांशुक्लपक्षेनराधिप सापिपुण्यतमाप्रोक्ताग्राह्यासागतिकाम्यया चतुर्थ्यामेकभुक्तंच
पंचम्यांनक्तमाचरेत् कुर्याच्चांद्रमसंनागमथवाकलधौतजं हेमरौप्यंचेत्यर्थः अथदारुमयंभव्यंमृन्मयंवाप्यशक्तितः पंचम्यामर्चये
द्भक्त्यानागंपंचफणंतथा करवीरैस्तथापद्मैर्जातिपुष्पैःसुगंधिभिः गंधधूपैश्चनैवेद्यैःस्नाप्यक्षीरादिभिर्नृप ब्राह्मणान्भोजयेत्स-
श्वा घृतपायसमोदकैः अनंतंवासुकिंशेषंपद्मंकंबलमेवच तथाकर्कोटकंनागंनागमश्वतरंनृप धृतराष्ट्रंशंखपालंकालियंतक्षकंत-
था पिंगलंचतथानागंमासिमासिक्रमाद्यजेत् पूजयित्वाप्रयत्नेनपंचम्यांनक्तभुग्भवेत् एवंद्वादशकृत्वावैश्रावणेतुसितेनृप वत्सरांते
यथाशक्त्याअन्नदानंचकारयेत् ब्राह्मणानांयतीनांचनागानुद्दिश्यभक्तितः इतिहासविदेनागंकांचनंरत्नचित्रितं गांचदद्यात्सवत्सांवैसर्वे

स्करसंयुतं दानकालेपठेदेनत्स्मरन्नारायणंविभुं सर्वगंसर्वधातारमनंतमपराजितं येकेचिन्मेकुलेसर्पदष्टाःप्राप्ताह्यधोगतिं व्रतदानेनगो
विंदमुक्तिभाजोभवंतुते इत्यर्घ्यंचार्घ्यंस्तैर्युक्तंसितचंदनमिश्रितं वासुदेवाग्रतोभूपतोयंतोयेथनिक्षिपेत् अनेनविधिनासर्वेयेमरिष्यंति-
वामृताः सर्पनस्तेपियास्यंतिस्वर्गतिंनृपसत्तम धृत्वासर्वान्समुद्धृत्यकुलजान्कुरुनंदन प्रयातिविष्णुसान्निध्यंसेव्यमानोप्सरोगणैः वित्त
शाठ्यविहीनोयःसर्वमेतत्फलंलभेत् नक्तेनभक्तिसहिताःसितपंचमीषुयेपूजयंतिफणभगान्कुसुमोपहारैः तेषांगृहेषुभयदाहिभवंति
सर्पाअर्चान्वितामणिमयूखविभासितांगाः येतस्यांपूजयंतीहनागान्भक्तिपुरःसराः नतेषांसर्पतोवीरभयंभवतिकिंचन इतिनि
नागदष्टपंचमीव्रतंभविष्योक्तं अथभाद्रपदशुद्धपंचमीव्रतं तच्चमध्यान्हव्यापिन्यांकार्यं तथामाधवीयेहारीतः पूजाव्रतेषुस
र्वेषुमध्यान्हव्यापिनीतिथिः दिनद्वये तद्व्याप्तौवापूर्वविद्धायांकार्यमितिमदनरत्नात् प्राप्तभाद्रपदेमासिशुक्लपक्षस्यपंचमी
तस्यांमध्यान्हसमयेनद्यादौविमलेजले कृत्वापामार्गसमिधअष्टोत्तरशताधिकाः अथवाकारयेत्सप्तदंतधावनमादितः वनस्पति
प्रार्थना आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्वैदंतधावनं तत्रमंत्रः
मुखदुर्गंधिनाशायदंतानांचविशुद्धये ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं अनेनदंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकं पंचगव्यमं
त्रः देशकालौसंकीर्त्यअमुककायाशुध्यर्थंपंचगव्यमहंकरिष्ये गायत्र्यागृह्यगोमूत्रंगंधद्वारेतिगोमयं आप्यायस्वेतिचक्षीरंदधिक्रा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्योतिर्वेदधिः शुक्रमसिज्योतिरसिअमृतमसिनामधामस्ति प्रियंदेवानामनाजुष्टंदेवयजनमसि इत्याज्यं देवस्यत्वेतिकुशोदकं आपोहि-
ष्ठेतिमंथयेत् तस्यचतुर्भागंहृत्वा सप्तपत्राःशुभ्रादर्भाअक्षताश्चैवसंस्थिताः तेनैवोद्धृत्यहोतव्यं अग्नयेस्वा० सोमायस्वा० इरावतीधे
नुमतीहिभूत्व० इदंविष्णुर्वि० ब्रह्मजज्ञानं० मानस्तोके० गायत्र्या० विष्णवे० ब्रह्मणे० रुद्राय० सूर्यायस्वाहेतिहोमयेज्जलमध्येवा प्रण
वेन अथचकेशवे[illegible]नाममंत्रेणस्त्रीणांपंचगव्यंकुर्यात् प्राशयेदिति नद्यादिकेतदास्नात्वाकृत्वानियममेवच ब्राह्मणीक्षत्रियावैश्याशू-
द्रावापिव[illegible]न कृत्वा [illegible] त्वानिजगृहंपुनः वेदींसम्यक्प्रकुर्वीत गोमयेनोपलिप्यतां इतिहेमा[illegible] रंगवल्लीसमायुक्ते सर्वतोभ
द्रमंडले [illegible]व्रणंसजलं [illegible] यमेवच संस्थाप्यवस्त्रसंयुक्तंकंठदेशेस्त्रशोभितं पंचरत्नसमायु[illegible] फलगंधाक्षतैर्युतं सहिरण्यं
समासाद्य[illegible]म्रेणप[illegible] वा वंशमृन्मयपात्रेणयवपूर्णेन्नचैवहि आच्छादयेच्चचैलेनलिखेदष्टदलंततः [illegible] सप्तऋषीन्दिव्यान्भक्ति
युक्तःप्रपूजयेत् अथसंकल्पः मासपक्षाद्युल्लिख्य मम ऋतुसंपर्कजनितदोषपरिहारार्थंअरुंधतीसहि[illegible]कश्यपादिसप्तऋषिप्रीत्य
र्थं ऋषिपूजनमहंकरिष्ये अथपूजाविधिः आगच्छंतुमहाभागाश्चतुर्वेदपरायणाः यावद्व्रतमिदंकुर्वेकृपयाभवतामहं आवाहनं मू
र्तिंब्रह्मण्यदेवस्यब्रह्मण्यंतेजउत्तमं सूर्यकोटिप्रतीकाशमृषिवृंदंविचिंतये ध्यानं ऋग्यजुःसामवेदानांस्वरूपेभ्योनमोनमः पुराणपु
रुषेभ्योहिदेवर्षिभ्योनमोनमः आसनं गंधपुष्पाक्षतैर्युक्तं पाद्यंगृण्हंतुभोद्विजाः प्रसादंकुरुतप्रीतास्तुष्टाःसंतुसदामम पाद्यं नमस्ये

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शुक्लपंचम्यामर्चितान्ऋषिसत्तमाः दहंतुपापंमेसर्वंगृण्हंत्वर्घ्यंनमोनमः अर्घ्यं लोकानांतुष्टिकर्तारोयूयंसर्वेतपोधनाः नमोवोधर्मविज्ञे
भ्योमहर्षिभ्योनमोनमः आचमनं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंकरिष्येऋषिसत्तमाः पंचामृ॰ मंदाकिन्याःसमानी
तंयमुनागौतमीजलं कृष्णाचनर्मदातापीताभ्यःस्नानार्थमाहृतं स्नानं सर्वेनित्यंतपोनिष्ठाब्रह्मज्ञाःसत्यवादिनः वस्त्राणिप्रतिगृण्हं
तुमुक्तिदाःसंतुमेसदा वस्त्रं नानामंत्रैःसमुद्भूतंत्रिवृतंब्रह्मसूत्रकं प्रत्येकंचप्रयच्छामिऋषयःप्रतिगृह्यतां [illegible]पवीतानि कुंकुमागरुकर्पू
रस्कगंधैर्मिश्रितंशुभं गंधाढ्यंचंदनंदिव्यंगृण्हंतुऋषिसत्तमाः गंधं अक्षताश्चसंपूर्णाःप्रक्षाल्यचनि[illegible]जिताः शोभायैवोमयाद-
त्तागृह्यतां मुनिसत्तम[illegible]मालतीचंपकादीनितुलस्यादीनिवैद्विजाः मयाहृतानिपुष्पाणिपूजा[illegible]प्रतिगृह्य॰ पुष्पाणि॰ वनस्प
तिरसोद्भूतोगंधाढ्यः[illegible]यःसर्वदेवानांधूपोयंप्रतिगृह्यतां धूपं॰ आज्यंचवर्ति॰ दीपं॰ नाना[illegible]कान्नसंयुक्तंरसैःषड्भिःसम-
न्वितं गृण्[illegible]सपत्नपद्मप्रतिगृ॰ नैवेद्यं॰ मध्येपानीयं॰ उत्तरापो॰ हस्तप्रक्षालनं करोद्वर्तनार्थेचंदं॰ नमोवेदविदःश्रेष्ठाऋष
यःसूर्यसन्निभाः गृण्हंत्विदंफलंतुष्टामयादत्तंहिभक्तितः फलं पूगीफलं॰ तांबूलं हिरण्यगर्भेतिदक्षिणा यानिकानिचपापानिब्रह्मह
त्यासमानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे प्रदक्षिणां नमोस्तुऋषिवृंदेभ्योदेवर्षिभ्योनमोनमः सर्वपापहरेभ्योहिवेदविद्भ्यो
नमोनमः नमस्कारः एतेसप्तर्षयःसर्वेभक्त्यासंपूजितामया सर्वेपापंव्यपोहंतुज्ञानतोज्ञानतःकृतं प्रार्थना वायनं कृतायाःपूजायाःसा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गतासिध्यर्थंब्राह्मणायवायनप्रदानंक॰ तथाचब्राह्मणपूजनं वायनंफलसंयुक्तंसघृतंदक्षिणान्वितं द्विजवर्यायदास्यामिव्रतसंपूर्ण-
हेतवे भवंतःप्रतिगृण्हातुज्योतीरूपास्तपोधनाः उभयोस्तारकाःसंतुवायनस्यप्रदानतः वायनं न्यूनातिरिक्तकर्माणिमयायानिकृतानिच
क्षमध्वंतानिसर्वाणियूयंसर्वेतपोधनाः यांतुदेव॰ विसर्जनं एवंसंपूज्याविधिवद्भक्तियुक्तेनचेतसा तेषामग्रेचश्रोतव्यंशुभंचैवकथानकं
इतिपूजाविधिः अथकथा हेमाद्रौब्रह्मांडे सिताश्वउवाच श्रुतानिदेवदेवेशव्रतानिसुबहूनिच सांप्रतंमेसमाचक्ष्वव्रतंपापप्रणाशनं ब्रह्मोवा
च शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमंव्रतं ऋषिपंचमीतिविख्यातंसर्वपापहरंपरं येनचीर्णेनराजेंद्रनरकंनैवपश्यति तत्रैवोदाहरिष्यंतिइति
हासंपुरातनं वैदर्भिविद्द्विजवरउत्तंकोनामनामतः तस्यभार्यासुशीलेतिपतिव्रतपरायणा तस्याअपत्ययुगुलंपुत्रोहिसुविभूषणः अधीतवा
न्सुतस्तस्यवेदान् षडंगपदक्रमान् समानेनकुलीनेनसुतावापिविवाहिता विवाहितापिसादैवाद्वैधव्यंप्रापसत्तमा सतीत्वंपालयंतीसाआ
स्तेनिजपितुर्गृहे वेद थादुःखेनसंतप्तःसतुसंस्थाप्यवेश्मनि गंगातीरवनंप्राप्तःकदाचित्सुतयासह सतत्राध्यापयामासशिष्यान्वेदंद्विजो
त्तमः सुताचकुरुतेतस्यपितुःसुश्रूषणंपरं पितुःसुश्रूषणंकृत्वापरिश्रांताकदाचन निशीथेकिलसंसुप्तासाकृमिराशिरजायत शिष्यास्त
थाविधांदृष्ट्वाविवस्त्रांप्रस्तरेस्थितां शिष्यानिवेदयामासुस्तन्मातुःकरुणास्थिताः नजानीमोवयंकिंचिद्देवीसाध्वीतथाविधा कृमिराशि
मयीजातामातःसंप्रतिदृश्यते वज्रपातसमंश्रुत्वातच्छिष्येनउदाहृतं साक्रांतमानसाशीघ्रंतत्समीपमुपागतं सातांतथाविधांदृष्ट्वा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ब्र॰रा॰
९२

विललापस्रु दुःखिता उरस्थताडयामासरूतरांमोहमापच क्षणेनप्राप्यचैतन्यमुत्थाप्यमतिमृज्यन्च समालंब्यनबाहुभ्यांनित्येतस्यितु
रतिकं स्वामिन्कथयमेसाध्वीकेनदुष्कृतकर्मणा निशीथेनप्रसूतेचजायतेकृमिसंकुला एवंश्रुत्वाततोवाक्यंऋषिर्ध्यानपरायणः ज्ञा
त्वानिवेदयामासतस्याःप्राकूजन्मचेष्टितं ऋषिरुवाच प्रागियंसप्तमेतीतेजन्मनिब्राह्मणीत्यभूत् रजस्वलाचसंजाताभांडादीन्यस्पृश
त्तदा अस्यास्तुप[illegible]तेनजायतेकृमिवद्वपुः रजस्वलायाःपापेनमुक्ताभवतिसानघे प्रथमेहनिचांडालीद्वितीयेब्रह्मघातिनी तृती
येरजकीप्रोक्ता[illegible]हनिशुध्यति तदातयासखीसंगाद्व्रतंदृस्वावमानितं दृष्टव्रतप्रभावेनजाताद्विजकुलेमले अवमानाद्व्रतस्यास्य
कृमिराशिमयी[illegible] एतत्तेकथितंसर्वकारणंदुष्कृतस्यच सुशीलेवा॰ दर्शनादपिजन्मस्याद्विप्राणांनिर्मलेकुले जन्मयुष्मद्विधा-
नांहिजाय[illegible]तजसा अवज्ञयाप्रजायंतेनिशीथेकृमिराशयः महाश्चर्यकथंनाथतद्व्रतंकथयस्वमे ऋ[illegible]वा॰ सुशीलेशृणु
तत्सम्यक्व्रतं[illegible]मुत्तमव्रतं येनचीर्णेनसहसापापादस्मात्प्रमुच्यते दुःखत्रयाच्चमुच्येतनारीसौभाग्यमाप्नुयात् कल्याणानिविव-
र्धंतेसपदश्चनिरापदः युधिष्ठिरउ॰ श्रुतानिदेवदेवेशव्रतानिसुबहूनिच सांप्रतंमन्यदाचक्ष्वव्रतंपापप्रणाशनं श्रीकृष्णउ॰ अथा
न्यदपिराजेंद्रपंचमीऋषिसंज्ञितां कथयिष्यामियत्कृत्वानारीपापात्प्रमुच्यते युधिष्ठिरउ॰ कीदृशीपंचमीकृष्णकथंचऋषिसंज्ञि
ता पातकान्मुच्यतेकस्मान्नारीयदुकुलोद्भव पापानिचबहून्यत्रविद्यंतेकिलकेशव कथंवाऋषिपंचम्यांनारीकस्मात्प्रमुच्यते कृष्णउ॰

पं॰
५
९२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अज्ञानाज्ज्ञानतोवापियास्त्रीजातारजस्वला दुष्टास्पृशतिभांडानिगृहकर्मणिसंस्थिता प्राप्नोतिसामहापापंसत्यंसानरकंव्रजेत् शृणुतत्का
रणंयस्माद्वर्जनीयारजस्वला प्रोत्सार्यगृहतोदूरंचातुर्वर्ण्येनभारत ब्रह्महत्यापुराशक्रोवृत्रंहत्वात्यवापच तयावैराजशार्दूलपीडितोवृत्रसू-
दनः ब्रह्माणंसमुपागच्छदात्मनःशुद्धिकारणात् शुद्धिंशक्रस्यराजेंद्रप्रत्दृष्टेनांतरात्मना विभज्यब्रह्महत्यांतुचतुर्धाचचतुर्मुखः प्राक्षिप
द्राजशार्दूलचतुस्थानेषुवैतदा वन्हौप्रथमज्वालासुनदीषुप्रथमोदके पर्वताग्रेवृक्षजातौनारीरजसिपार्थिव ततोरजस्वलानारीप्रोत्सार्याच
प्रयत्नतः ब्रह्मणःशासनात्सार्थंचातुर्वर्ण्येनसर्वदा प्रथमेहनिचांडालीद्वितीयेब्रह्मघातकी तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुध्यति भ
र्तुःशुश्रूषाचतुर्थेन्हिदैवेपित्र्येचपंचमे अज्ञानाज्ज्ञानतोवापिजातंसंपर्कपातकं तत्पापसंक्षयार्थंवैकार्येयंऋषिपंचमी सर्वपापप्रशमनीस-
र्वोपद्रवनाशिनी ब्रह्मक्षत्रियविट्शूद्रस्त्रीभिःकार्याविशेषतः कृष्णउवा० अत्रार्थेयत्पुरावृत्तंप्रवक्ष्यामिकथानकं पुराकृतयुगेराजा-
विदर्भायांबभूवह श्येनजिन्नामराजर्षिश्चातुर्वर्ण्यानुपालकः तस्यदेशेवसन्विप्रोवेदवेदांगपारगः सुमित्रोनामराजेंद्रसर्वभूतहितेरतः
कृषिवृत्त्यासदायुक्तःकुटुंबपरिपालकः तस्यभार्यासुसाध्वीचपतिशुश्रूषणेरता जयश्रीर्नामविख्याताबहुभृत्यसुहृज्जनाः अति-
चिंतान्वितासाचप्रावृट्कालेसुमध्यमा क्षेत्रादिषुरतासाध्वीव्याकुलीकृतमानसा एकदासात्मनःप्राप्तमृतुकालंव्यलोकयत् रजस्व
लापिसाराजन्गृहकर्मचकारह भांडादीन्यस्पृशद्राजन्नृतौप्राप्तेपिभामिनी कालेनबहुनासाध्वीपंचत्वमगमत्तदा तस्याभर्तापिविप्रो

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र·रा·
९४

पं·
५

सोकालधर्ममुपेयिवान् एवंतौदंपतीराजन्स्वकर्मवशगौतदा भार्यातस्यजयश्रीसाऋतुसंपर्कदोषतः शुनियोनिसमुत्पन्नाशुनी
चाभून्नरेश्वर तस्याःसंपर्कदोषेणबलीवर्दोबभूवह एवंतौदंपतीराजन्स्वकर्मवशगौतदा ऋतुसंपर्कदोषेणातिर्यग्योनिमुपागतौ स्व-
धर्माचरणाज्जातावुभौजातिस्मरौतदा सुतस्तस्यैवगृहेराजन्स्मरंतौपूर्वपातकं सुमित्रस्तस्यचपुत्रोभूद्गुरुशुश्रूषणेरतः सुमतिर्नाम-
धर्मज्ञोदेवतातिथिपूजकः अथक्षयाहेसंप्राप्तेपितुस्तुसुमतिस्तदा भार्यांचंद्रवतींप्राहसुमतिःश्रद्धयान्वितः अद्यसांवत्सरदिनं
पितुर्मेचारुहासिनी भोजनीयाद्विजाभीरुपाकशुद्धिर्विधीयतां तयाकृतापाकशुद्धिःसुमतेर्भर्तुराज्ञया मुक्तपायसभांडेवैसर्पेण
गरलंततः दृष्ट्वाब्रह्मवधाद्भीताशुनीभांडानिसास्पृशत् द्विजभार्याचतांदृष्ट्वाउल्मुकेनजघानह भांडादीनिचप्रक्षाल्यत्यक्त्वापाकंसुम
ध्यमा पुनःपाकंचकृत्वातुश्राद्धंकृत्वाविधानतः ततोभुंक्तेषुविप्रेषुनोच्छिष्टंचददौबहिः भूमौक्षिप्तंतथाशून्यास्युपवासस्ततोभवत्
ततोरात्र्यांप्रवृत्तायांसाशुनीक्षुधिताभृशं बलिवर्दमुपागत्यभर्तारमिदमब्रवीत् बुभुक्षिताद्यहेभर्तर्नदत्तंभोजनादिकं ग्रासादिकंच
नग्रासंक्षुधामांबाधतेभृशं अन्यस्मिन्दिवसेपुत्रोममलेह्यंददात्यसौ अद्यमह्यंकिमप्येषउच्छिष्टमपिनोददौ पायसान्नेपपाताद्यगर
लंसर्पसंभवं मयाविचिंत्यमनसामरिष्यंतिद्विजोत्तमाः संस्पृष्टंपायसंगत्वाबध्वाहंताडिताभृशं दुःखितंतेनमेगात्रंकटिर्भग्नाकरो
मिकिं ततःप्राहसचानड्वान्भद्रेतेपापसंग्रहात् किंकरोमिह्यशक्तोहंभारवाहोद्यसंस्थितः अद्याहमात्मजक्षेत्रेवाहितःसकलंदिनं मा

९४

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रितश्चात्मजेनाहंसुखंवध्वाबुभुक्षितः वृथाश्राद्धंकृतंतेनजाताद्यममकष्टता कृष्णाउवाच तयोःसंवदतोरेवंमातापित्रोश्चभारत
श्रुत्वापुत्रस्तदावाक्यंयदुक्तंचतदोभयोः ततोरजन्यांतत्कालंददौतस्यैवभोजनं पितरौतौविदित्वातुदत्तवान्सुमतिस्तदा तदासौदुः
खितःपुत्रोज्ञात्वावस्थांतदातयोः मातापित्रोस्तुराजेंद्रतदासौप्रस्थितोवनं ज्ञातुमिच्छामिकष्टंवैमातापित्रोश्चभारत तत्रगत्वाज्ञान
वृद्धान्ऋषीन्परमधार्मिकान् प्रणिपत्याब्रवीद्वाक्यंहितंचैवतदातयोः सुमतिरुवाच कथयध्वंविप्रवर्याःप्रश्नमेकंसमाहिताः
केनकर्मविपाकेनपितरौमेतपोधनाः इमामवस्थांसंप्राप्तौमुच्यतेपातकात्कथं कृष्णाउवाच तदाकर्ण्यवचस्तस्यसुमतेर्दुःखितस्यच ऋ
षिःसर्वतपोनामसर्वज्ञःकरुणान्वितः सुमतिंप्रत्युवाचेदंतत्पित्रोर्मुक्तयेतदा ऋषिरुवा० तवमातापुराविप्रस्वगृहेबालभावतः प्राप्त
मृतुंविदित्वातु[illegible]पर्कमकरोद्द्विज तेनकर्मविपाकेनशुनियोनिमुपागता पितापिसस्पर्शदोषेणबलीवर्दोबभूवह एतयोर्मुक्तिकामार्थंकुरुत्व
मृषिपंचमीं भार्ययासहविप्रेंद्रऋषीन्संपूज्ययत्नतः आचरस्वव्रतंतत्रसप्तवर्षीद्विजोत्तम अंतेचोद्यापनंकुर्याद्वित्तशाठ्यविवर्जितः
शाकाहारस्तुकर्तव्योनीवारैःश्यामकैस्तथा कंदंवाथफलंमूलंहलकृष्टंनभक्षयेत् प्राप्तेभाद्रपदेमासिशुक्लपक्षस्यपंचमी तस्यामध्या
न्हसमयेनद्यादौविमलेजले कृत्वापामार्गसमिधादंतधावनमादितः आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदे
हिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्वैदंतधावनं सुखदुर्गंधिनाशायदंतानांचविशुद्धये ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं अनेन

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र·रा·
९५

दंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकं तिलामलककल्केनकेशान्संशोध्ययत्नतः परिधायनवेशुद्धेवाससीचसमाहितः विधायनित्यकर्मा
णिगत्वाद्वारवतीमृषीन् द्वारवतीमग्निहोत्रशालां स्नापयेद्विधिवद्भक्त्यापंचामृतरसैःशुभैः चंदनागरुकर्पूरैर्विलिप्यचसुगंधिभिः
पूजयेद्विविधैःपुष्पैर्गंधपुष्पादिदीपकैः समाच्छाद्यशुभैर्वस्त्रैःसोपवीतैर्यथाविधिः ततोनैवेद्यसंपन्नैरर्घ्यंदद्याच्छुभैःफलैः पूज
यस्वऋषींदिव्यानरुंधत्यासमन्वितान् कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठस्यसाध्वीचैवाप्यरुंधती मंत्रेणाने
नसप्तर्षीन्पूजयेत्सुसमाहितः व्रतेनऋषिपंचम्याःकृतेनैवद्विजोत्तम ऋतुसंपर्कजोदोषःक्षयंयातिनसंशयः श्रीकृष्णउ॰ तच्छ्रु
त्वासुमतिर्वाक्यंपरमंऋषिभाषितं गृहमेत्यव्रतंचक्रेसभार्यःश्रद्धयान्वितः व्रतंतुऋषिपंचम्याःसर्वपापप्रणाशनं कृत्वासर्वंयथो
क्तंचमातापित्रोःफलंददौ व्रतपुण्यप्रभावेनमातातस्यशुनयोनितः मुक्तानृपतिशार्दूलविमानवरसंस्थिता दिव्यांबरधराभूत्वागतास्व
र्गंचभारत पितापिसमृतोगच्छत्सुमतेःपशुयोनितः स्वर्गंप्राप्तोमहाराजव्रतस्यास्यप्रभावतः दिव्यांबरधरोभूत्वा गतःस्वर्गंच
भारत कायिकंवाचिकंवापिमानसंयच्चदुष्कृतं तत्सर्वंविलयंयातिव्रतस्यास्यप्रभावतः यस्ययज्जायतेपुण्यं तच्छृणुष्वनृपोत्तम
सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतदेतद्व्रतचारणात् कुरुतेयाव्रतंनारीसाभवेत्सुखभागिनी रूपलावण्ययुक्ता
चपुत्रपौत्रादिसंयुता इहलोकेसुखंभूयात्परत्रेचपरांगतिं एतत्तेकथितंराजन्व्रतानामुत्तमंव्रतं सर्वसंपत्प्रदंचैवनारीणांपापनाशनं

पं·
५

९५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धनंयशश्चस्वर्गंचपुत्रानपियुधिष्ठिर पठतांशृण्वतांचापिसर्वपापप्रणाशनं इतिश्रीभ० पुराणेऋषिपंचमीव्रतकथासंपूर्णा अथो
द्यापनं युधिष्ठिरउ० किमस्योद्यापनंप्रोक्तंव्रतपूर्णफलप्रदं स्रमतिःकेनविधिनाचकारवदतत्वतः कृष्णउ० पूर्वस्मिन्दिवसेकुर्यादेक-
भक्तंसमाहितः प्रातरुत्थायस्रत्वानस्ततोगुरुगृहंव्रजेत् प्रार्थयेत्तंममाचार्योभवोद्यापनकर्मणि पूर्वोक्तेनैवविधिनास्नात्वाभक्त्यास-
मन्वितः शुचौदेशेसमुल्लिप्यसर्वतोभद्रमंडले अव्रणंसजलंकुंभंताम्रंमृन्मयमेवच संस्थाप्यवस्त्रसंवीतंकंठदेशेस्रशोभनं पंचर
त्नसमायुक्तंफलगंधाक्षतैर्युतं सहिरण्यंसमासाद्यताम्रेणपटलेनवा वंशमृन्मयपात्रेणयवपूर्णेनचैवहि आच्छादयेत्तुचैलेनलिखे
दष्टदलंततः सौवर्णींप्रतिमाकार्याऋषीणांभावितात्मनां पलेनवातदर्धेनतदर्धार्धेनवापुनः शक्त्यावाकारयेत्तत्रवित्तशाठ्यविवर्जि-
तः कृष्णउवा० वितानंपंचवर्णंचफलपुष्पसमन्वितं बध्नीयादुपरिश्रीमत्संभारान्संविधायच मध्यान्हेपूजयेद्भक्त्याऋषीन्श्रद्धा
समन्वितः कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगोतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती गृण्हंत्वर्घ्यंमयादत्तंतुष्टाभवतुमेसदा
एवंपूजांविनिर्वर्त्यऋषीन्ध्यात्वासमाहितः अनेनविधिनासप्तवर्षाणिव्रतमाचरेत् आदौमध्येतथाचांतेकुर्यादुद्यापनंबुधः आत्मा
र्थीन्वरयेत्सप्तवेदवेदांगपारगान् प्रतिमाःसप्तकुर्वीतस्रवर्णेनस्वशक्तितः जटिलाःसाक्षसूत्राश्चकमंडलुसमन्विताः संस्थाप्यकल-
शेष्वेतान्मृन्मयेष्वव्रणेषुच स्नापयेद्विधिवद्भक्त्यापंचामृतपयादिभिः पूर्वोक्तविधिनाराजन्कृत्वापूजांसमाहितः रात्रौजागरणं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कुर्यात्पुराणश्रवणादिभिः कृतनित्यक्रियः प्रातर्जुहुयात्तिलसर्पिषा वैदिकोवाथपौराणअधिकारीमनुस्मृतः सहस्तोमाःसहावाय
नामभिर्मंत्रैःकृत्वापृथक् अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा पुनः पूजांततःकृत्वागुरुंसंपूजयेद्व्रती स्वर्णांगुलीयवासोभिःकुंडलाभ्रूत
भोजनैः सप्तगाश्चैवदातव्यावस्त्रालंकारसंयुताः दद्यादेकांसवत्सांचगुरवेगांपयस्विनीं पूजयेदृत्विजःसप्तवासोभिर्दक्षिणादिभि
कलशानुपवीतानिदद्यात्तेभ्यःस्वभक्तितः आचार्यंचसपत्नीकंप्रणिपत्यसमापयेत् भोजयेद्ब्राह्मणान् भ[...]यादीनानाथान्प्रतर्प्य
च सोपस्करास्ताःप्रतिमाआचार्यायनिवेदयेत् लब्ध्वानुज्ञांतुभुंजीतइष्टैर्बंधुजनैःसह उद्यापनविधिःप्रोक्तेसर्वत्रायंफलार्थिनां
अनेनविधिनासम्यक्व्रतमेतत्समाचरेत् सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतदेतद्व्रतचारिणां एवंयाकुरुतेभूपउद्या
पनविधिंपरं सर्वपापविनिर्मुक्तास्वर्गेलोकेमहीयते इहलोकेचिरंकालंभर्त्रासहशुभविस्मिता पुत्रपौत्रैःपरिवृता भुक्त्वाभोगान्मनोहरा
न् निःपापास्त[...]र्गानित्यंलभतेचाक्षयांगतिं इतिश्रीभ॰ऋषिपंचमीव्रतोद्यापनविधिः अथआश्विनशुक्लपंचम्यांउपांगललिता
व्रतं तत्रदाक्षिणात्यानांशिष्टाचारएवप्रमाणं तच्चमध्यान्हव्यापिन्यांकार्यं पूजाव्रतेषुसर्वेषुमध्यान्हव्यापिनीतिथिरितिमाधवीयेहा
रीतोक्तेः दिनद्वयेतद्व्याप्तावव्याप्तौपूर्वायुगभूतादइतियुग्मवाक्यदानात् अन्यच्चशक्तिपूजायांतु अर्धरात्रव्यापिनीग्राह्या यत्तुभूरिज
न्माजजल्पवचनंविनारात्रिव्यापिन्याग्रहणेप्रमाणाभावात् जागरणस्यचांगत्वात्पूर्वाण्हव्यापिन्येनग्राह्येतितच्चभूरिजन्मनोमंदप्रज्ञस्य-

पं. ५

१६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दुर्बुद्धिविलसितमात्रमित्युपेक्ष्यं अथव्रतविधिः आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्यममपुत्रधनविद्यारोगनिर्मुक्तसुखगोविज
यपुष्ट्यायुष्यादिकामः स्त्रीअवैधव्यकामाउपांगललिताप्रीत्यर्थंयथामीलितोपचारैःउपांगललितापूजनमहंकं० इतिसंक० पूजांकुर्या
त् शुक्लपक्षस्यपंचम्यामिषेमासिचरेद्व्रतं चत्वारिंशन्तथाष्टौवादंतधावनमादितः आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञां
चमेधांचत्वन्नोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्वैदंतधावनं मुखदुर्गंधिनाशायदंतानांचविशुद्धये ष्ठीवनायचगात्राणांकुर्वेहंदंतधा
वनं अनेनदंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकं ततोयथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् शुचौदेशेसमालिख्यसर्वतोभद्रमंडलं
अव्रणंसजलंकुंभंताम्रंमृन्मयमेवच संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभनं पंचरत्नसमायुक्तंगंधपुष्पाक्षतैर्युतं. सहिरण्यंसमासाद्य
ताम्रेणपटले[illegible]वे वंशमृन्मयपात्रेणयवपूर्णेनचैवहि आच्छादयेत्सचैलेनलिखेदष्टदलंततः सौवर्णींराजतीं[illegible]पिधानंस्थापयेत्ततः
उपचारैःषोडशभिरेभिर्मंत्रैःसमाहितः नित्यंनैमित्तिकंकुर्यात्ततःपूजांसमाचरेत् इतिविधिः मममनेप्सितकामनासिद्ध्यर्थंप्रतिवा-
र्षिकमुपांगललितापूजनमहंकरिष्ये तत्रादौगणपतिपूजनंकं० अथपूजा नित्यकौशेयवसनांहेमाभांकमलासनां भक्तानांवर
दांनित्यंललितांचिंतयाम्यहं ध्यायामि निजासनेस्वायुधैश्चललितेभक्तवत्सले उपांगललितेमातर्देहिमेव्रतकर्मणि आगच्छललितेदे
विसर्वसंपत्प्रदायिनी यावद्व्रतंसमाप्येततावत्त्वंसन्निधौभव हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां चंद्रांहिरण्मयींलक्ष्मींजातवेदोममाव

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

श्र॰रा॰
९७

ह्व आवा॰ कार्तस्वरमयंदिव्यंनानामणिगणान्वितं अनेकशक्तिसंयुक्तमासनंप्र॰ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंविं
देयंगामश्वंपुरुषानहं आसनं गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां अश्वपूर्वांरथमध्यांहस्ति
नादप्रबोधिनीं श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषतां पाद्यं॰ निधिनांसर्वरत्नानामनर्घ्येत्वगुणात्मसि तथापिभक्त्यालालिते गृहाणार्घ्यंनमो-
स्तुते कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं अर्घ्यं॰ मालतीशीरकर्पूरसुरभि
स्वादुशीतलं[illegible]तोयमाचमनीयार्थंलालितेप्रतिगृह्यतां चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां तांपद्मिनीमींशरणमहंप्र
पद्येलक्ष्मीर्मेनश्यतांत्वांवृणोमि आचम॰ पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंप्रीयतांपरमेश्वरी आप्याय॰ ऋ॰ द
धिक्रा॰ ऋ॰ घृतंमिमि॰ ऋ॰ मधुवातेति ऋक् स्वादुःपवस्वेति ऋक् पंचामृतस्नानं मंदाकिन्याःसमुद्भूतं हेमांभोरुहवासितं स्नानायतेम
याभक्त्यादत्तंस्वी[illegible]क्रियतांजलं आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः तस्यफलानितपसानुदंतुमायांतरायाश्चबा
ह्याअलक्ष्मीः स्नानं॰ सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां उपैतुमांदेवसखःकीर्तिश्चम
णिनासह प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे वस्त्रं मुक्तामणिगणोपेतमनर्घ्यंचसुखप्रदं उत्तरीयंसुखस्पर्शंलालितेप्रतिगृ
ह्य॰ उत्तरीयवं॰ हृष्णा कांचनाष्टसंयुक्तं सू त्रंग्रैवेयकंतथा दास्यामिकंठमालार्थंमत्यंगेलालितेतव कंठमालां॰ मलयाचलसंभूतंघनसारं

पं॰ ५
९७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मनोहरं ह्रदयानंदनंचारुचंदनंप्रतिगृ॰ क्षुत्पिपासामलाज्येष्ठामलक्ष्मींनाशयाम्यहं अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् चंदनं॰
अक्षताविमलाःशुद्धामुक्ताभाससमप्रभाः भूषणार्थंमयादत्तागृहाणपरमेश्वरी गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूता
नांतामिहोपव्हयेश्रियं अक्षताः मालतीचंपकादीनिनानापुष्पैःसुवासितैः मयाहृतानिपुष्पाणिपूजार्थंमे॰ मनसःकाममाकूतिंवाचः
सत्यमशीमहि पशूनांरूपमन्नस्यमयीश्रीःश्रयतांयशः पुष्पं अथांगपूजा उपांगललितायै॰ पादौपू॰ भवान्यै॰गुल्फौपू॰सिद्धेश्वर्यै॰
जंघेपू॰ भद्रकाल्यै॰जानुनीपू॰ श्रियै॰ऊरूपू॰ विश्वरूपिण्यै॰कटिंपू॰ देव्यै॰नाभिंपू॰ वरदायै॰कुक्षीपू॰शिवायै॰हृदयंपू॰ वागीश्व
र्यै॰स्कंधौपू॰महादेव्यै॰बाहूपू॰भक्तनिभद्रायै॰करौपू॰पद्मिन्यै॰कंठंपू॰सरस्वत्यै॰मुखंपू॰ कमलासनायै॰नासिकांपू॰महिषमर्दि
न्यै॰नेत्रौ॰लक्ष्म्यै॰ कर्णौ॰ भवान्यै॰ललाटंपू॰विंध्यवासिन्यै॰शिरःपू॰ सिंहवाहिन्यै॰ सर्वांगंपू॰ देवद्रुमरसोद्भूतःकालागरुसमन्वितः
आघ्रेयतामयंधूपोभवानीघ्राणतर्पणः कर्दमेनप्रजाभूतामयिसंभवकर्दम श्रियंवासयमेकुलेमातरंपद्ममालिनीं धूपं॰ चक्षुर्षासर्वलो
कानांतिमिरस्यनिवारणं आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरी आपस्त्रजंतुस्निग्धानिचिक्लीतवसमेगृहे नीचदेवींमातरंश्रियंवा
सयमेकुले दीपं मोदकापूपलड्डुकवटकोदुंबरादिभिः सघृतंपायसान्नंचनैवेद्यंप्रतिगृ॰ आर्द्रांपुष्करणींपुष्टींसुवर्णांहेममालिनीं सूर्यांहि
रण्मयींलक्ष्मींजातवेदोममाव॰ह नैवेद्यं॰ मलयाचलसंभूतंघनसारंमनोहरं करोद्वर्तनकंचारुगृहाणपरमेश्वरि करोद्वर्तनं॰ कर्पूरैला॰

वंगादितांबूलीदलसंयुतं क्रमुकस्य फलं तुभ्यं तांबूलं प्र॰ आर्द्रां यः करणीं यष्टिं पिंगलां पद्ममालिनीं चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो मम आवह
तांबूलं मातुलिंगनारिकेलं फलं खर्जूरसंभवं जंबीरपनसं चापि गृह्यतां परमेश्वरि इदं फलं मया दे॰ तां म आवह जातवेदो लक्ष्मीमनपगामि
नीं यस्यां हिरण्यं प्रभूतिं गावो दास्यो ऽश्वान्विंदेयं पुरुषानहं फलं॰ हिरण्यगर्भ॰ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहं सूक्तं पंचद
शर्चस्य श्रीकामः सततं जपेत् दक्षिणां चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च त्वमेव सर्वज्योतींषि आर्तिक्यं प्र॰ पद्मासने पद्मऊरु पद्मा
क्षी पद्मसंभवे तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहं नीराज॰ उपांगललिते मातर्नमस्ते विंध्यवासिनी दुर्गे देवि नमस्तुभ्यं नमस्ते वि
श्वरूपिणी अश्वदायै गोदायै धनदायै महाधने धनं मे लभतां देवी सर्वकामांश्च देहि मे पुष्पांज॰ अथ दूर्वांकुरान् साग्रान् चत्वारिंशत्
शाष्टभिः अधिकान् हस्ते आदाय मंत्रमेतज्जपेद्बुधः मंत्रः बहुप्ररोहा सततममृता हरिता लता यथा त्वं ललिते मातस्तथा मे स्युर्मनोरथाः
इत्युक्त्वा पूजयेद्देवीं दूर्वाभिः कुंकुमैस्तथा मंत्रेणाष्टचत्वारिंशद्भक्तितस्तु समाहितः दूर्वांकुरान् प्रदक्षिणात्रयं देवि प्रयत्नेन मया कृतं ते
न पापानि सर्वाणि व्यपोहंतु नमाम्यहं प्रदक्षिणां साष्टांगो यं प्रणामस्ते नमस्कृत्य यथाविधि त्वद्दास इति मां भक्त्या प्रसीद परमेश्वरी नमः
स्कारः दीनोहं पापयुक्तोहं दारिद्र्यैकनिकेतनः समुद्धर कृपासिंधो कामान्मे सफलान्कुरु प्रार्थनां अथ वायनं द्विजाय वाणकं दद्यात् द्विशत्यावटका
दिभिः करदंकस्मेति मंत्रेण आचार्याय निवेदयेत् पक्वान्नफलसंयुक्तं सघृतं दक्षिणान्वितं द्विजवर्याय दास्यामि व्रतसंपूर्णहेतवे वाणकं द्विजवर्या



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यसहिरण्यंददाम्यहं इतिवायनमंत्रः ततःकथांसमाकर्ण्यवाणकान्नस्यसंख्यया स्वयंभुंजीतचैवान्नंवाग्यतः सहबांधवैः रात्रौजागरणंकुर्यान्नृ
त्यगीतादिमंगलैः प्रभातेपूजयेद्देवींततःकुर्याद्विसर्जनं सवाहनाशक्तियुक्तावरदापूजितामया मातर्मामनुगृह्याथगम्यतांनिजमंदिरं इतिविसर्जनं
इतिवार्षिकपूजाविधिः अथकथा सूतउ० पुराकैलासशिखरेमहर्षिगणसेविते षडाननंसुखासीनमिदमूचुर्महर्षयः ऋषयऊचुः महासेन
महादेवनंदनानंदविक्रम आख्यानानिसुपुण्यानिश्रुतानित्वत्प्रसादतः कथास्त्वद्वचनाद्देवमस्तूलाभूरिभूतयः नतृप्तिमधिगच्छामःपायंपायंसु
धामिव शुश्रूषवोवयंदेव्याव्रतंतत्कथयस्वनः मनोभिलषितार्थानांसिद्धिर्यस्मिन्कृतेभवेत् स्कंदउवा० साधुपृष्टंमहादेव्यामाहात्म्यंमुनिपुंगवा
वच्मिसर्वंविधानेनतच्छृणुध्वंजगद्धितं भृगुक्षेत्रेकिलपुराविप्रोभूद्धौतमाभिधः श्रुतिस्मृतिपुराणज्ञोधर्मीचबहुबांधवः अनपत्यस्यतस्याथ-
जज्ञातेजरसःसुतौ श्रीपतिर्गोपतिश्चैवनामनीविदधेतयोः अचिरेणैवकालेनसपंचत्वमगाद्द्विजः तौतुबालौधनंबधूर्नाहित्वासाधर्मचारिणी स
तीविवेशदहनंस्वर्यातुंपतिनासह अथतेबांधवाःसर्वेहाकष्टमितिचुक्रुशुः निर्दग्धोदुःखितास्वकुस्तत्क्रियांपारलौकिकीं अथतस्यसपत्नोभ्रू
ऋतासजगृहेधनं आक्रोशंतौचतौगेहंनिजमानीयदुर्मनाः नास्तिचक्रेधनंसर्वंताभ्यांकिंचिन्नवैददौ ततोमौंजीधरौबालौबंधुभिःकथितंवसुः
ययाचतुःपितृव्यंतंदेहिनोद्रविणंहितत् सतावूचेगतेद्रव्यंयुवांकेनप्रतारितौ निर्गच्छतांममगृहादित्यादिपरुषंबहु तौतद्वचोभिर्निर्विण्णौबा
लौश्रीपतिगोपतौ बभाषातेमिथःकष्टंधिगहोपितृहीनता यावोदेशांतरयत्रस्वजनोनास्तिकश्चन अनाभाष्यैवस्वजनानुजग्मतुर्दिशमुत्तरां

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भिक्षाचारौ बहून्देशान्वनानि सरितो गिरीन् समतिक्रम्य ययतुर्विशालांनामतः पुरीं कासारमीक्षांचक्राते ततोस्याः सन्निधौ शुभ्रं पुंडरीकवनाकी
र्णरक्तसंध्याविभूषितं संध्याभ्रभूषितं चारु यथा तारकितं नभः श्रांतौ पृथिगतौ बालौ क्षणं विश्रम्य तत्तटे आचम्य शिशिरं तोयं सस्नतुस्तोययथावि
धि गताध्वखेदौ विप्राग्र्यौ पुरं प्राविशतां ततः वीथीन्चतुःपथयुतं चारुगोपुरमंडितं देवतागाररुचिरं सौधराजिविराजितं नानावीथीरतिक्रम्य
विप्रावासमवापतुः कस्यचित्त्वथ विप्रस्य क्षुत्पिपासार्दितौ गृहं इच्छेतुर्वेदिकायां तावुपविष्टौ श्रमातुरौ स्वामी ततोस्य गेहस्य विवेक इति विश्रु
तः आयातौ वैश्वदेवांते स ददर्शातिथी द्विजौ अनापृच्छस्तथाशीलस्तथान्वकुलनामनी ऋषिवत्पूजयामास स्मरन्धर्मं सनातनं अतिथी भोज
यामास स्वाद्वन्नं सह चात्मना तौ ब्रह्मचारिणौ विप्रौ सपर्यां तां विलोक्य च देशबंधुपरित्यागखेदमुक्तौ बभूवतुः अथापृच्छद्द्विजस्तौ तु कौतुकी युवां
कुत आगतौ किमर्थमल्पवयसौ निर्गतौ स्वगृहादिति तद्विवेकस्य वचनमाकर्ण्य श्रीपतिस्तदा आनुपूर्व्येण सकलं वृत्तांतं समभाषत पितृही
नौ च तौ ज्ञात्वा त्यक्तौ बंधुजनेन च आश्वास्य स्थापयामास स्वगृहे बहुवासरं पंचक्रमे यथा शिष्यैश्च सहाध्यापयितुं श्रुति बभूवतुश्च तौ बालौ गु-
रुशुश्रूषणे रतौ गुरोर्गेहे न्यवसतामागता निर्मला शरत् फुल्लपद्मविशालाक्षी प्रसन्नेंदुशुभानना तस्यां सशिष्यमाचार्यं चरंतं व्रतमुत्तमं
पप्रच्छतुर्भो किमिदमावाभ्यामिति कथ्यतां ताभ्यामेवं कृते प्रश्ने विवेक इदमब्रवीत् विवेक उ० उपांगललितादेव्या व्रतं देवर्षिपूजितं
सर्वकामकरं नृणामस्माभिः समुपास्यते विद्याकामेन कर्तव्यं तथैव धनकाम्यया स्नुतार्थिना मकर्तव्यं व्रतमेतदनुत्तमं विद्याकामौ च तौ बा

धनंतदा विदधेचतयोर्गेहंनातिदूरंस्ववेश्मतः तत्रोषतुःसानुरागौमिथस्तौदंपतीचिरं पिधानकंतयानीतंनिजंललितयागृहं शनैरथ-
धनंसर्वंगोपतेरगमद्गृहात् गुणराशिर्धनीजातोमहादेव्याःप्रसादतः करंडस्यपिधानंतज्जनन्याबहुवासरं याचितापिनवैप्रादात्ललितापू
जनंगृहे अथसागोपतेर्भार्यातस्यैवानर्चनाद्धतं इत्थंविचिंत्यपापात्माजामातरमघातयत् समिदर्थंवनंयातःस्वयंतद्गेहमाययौ शो
चंतीकिलतांकन्यांसतुदेव्याःप्रसादतः उत्थायविपिनादेत्य भुक्त्वाशेतेस्मस्वंगृहे पादसंवाहनंतस्यकुरुतेललितातदा नेदृस्वादुःखिता
भूमौप्रणिपत्यपुनःपुनः लज्जिताकृच्छ्रतःपृष्टानिजपापंन्यवेदयत् स्कंदउवा० गुणराशिस्तदातस्यैप्रायश्चित्तंददौबहु आत्मानंबहु-
कालेनपूतंकृच्छ्रैश्चकारह श्रीपतेस्त्वचलांलक्ष्मींसमालोक्यतपोधनाः गोपतिस्तुयथापृच्छद्भ्रातस्त्वंवर्तसेकथं किमात्वरसिकल्याणंचे
नश्रीरनपायिनी इतितस्यवचःश्रुत्वाश्रीपतिर्विस्मितःपुनः अस्माभिस्तद्धृतंदेव्यायत्कृतंगुरुमंदिरे सोपिदेव्याव्रतंचक्रेपुनर्भार्योपदेशि
तं लेभेसपरमामृद्धिंपुत्रांश्चमुदितोभवत् उपांगललितादेव्याःकुर्यादाराधनंततः एवमेतत्पुरावृत्तंमाहात्म्यंकथितंमया कृतमन्यैश्चब-
हुभिस्तेपिलब्धमनोरथाः स्कंदउवा० विधानमस्यवक्ष्येहंतच्छृणुध्वंतपोधनाः शुक्लपक्षेतुपंचम्यामिषेमासिवरेद्धृतं गर्जितंसंध्ययो
स्त्याज्यंदिनवृद्धिक्षयौतथा निर्वर्त्यावश्यकंकर्मशुचीरागवि वर्जितः चत्वारिंशत्तथाष्टौचकल्पयित्वाविधानतः दंतकाष्ठान्युपादायत
डागंवानदींव्रजेत् आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते दंतधावनपूर्वाणिमज्जनानिसमाचरेत् त

रा०

तोयथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् उपचारैः षोडशभिरेभिर्मंत्रैःसमाहितः कुर्यात्पूजांप्रयत्नेन दूर्वाभिश्चविशेषतः शुचौदेशेमंडपि
कांकृत्वातीवमनोहरां सौवर्णीप्रतिमांशक्त्याकल्पयेन्मंत्रपूर्विकां द्विजायवायनंदद्याद्विंशत्यावटकादिभिः ततःकथांसमाकर्ण्यगणकान्न-
स्यसंख्यया स्वयं द्याच्चदेवान्वैवाग्यतःसहबांधवैः रात्रौजागरणंकुर्यान्नृत्यगीतादिमंगलैः प्रभातेपूज[...]ततःकुर्याद्विसर्जनं सुवाहना
शक्तियुतावरदापूजितामया मातर्मामनुगृह्याथगम्यतांनिजमंदिरं तामर्चांगुरवेदद्याद्दानानिचसदक्षिणाः इत्येवंचयःकुर्यात्सुप्रवान्धन
वान्भवेत् विद्यावान्रोगनिर्मुक्तोसुखीगोधनवान्जायते अवैधव्यंचलभतेस्त्रीकन्यावासुत्तमं विजयंपुष्टिमायुष्यंयच्चान्यदपिवांछितं इदंव्र
तम[...]ंसेतिहासं[...]र्षयः शृण्वन्[...]नरोभक्त्यासुखमाप्नोतिनिश्चितं निर्मुक्तःसुखीधीमान्व्रतराजप्रसादतः [...]मायामासु[...]
प्राप्नोतिचप्रसादतः इतिश्री०उपांगल०कथासमाप्ता अथोद्यापनं आचार्यंवरयेत्पश्चादृत्विजोविंशतितथा उपलिप्तेशुभेदेशेसलिलैर्मंडलं
नः ब्रह्मादींश्चततस्थाप्यपूजयेद्विधिमंत्रतः अव्रणेकलशेशुक्लेललितांस्थापयेत्तथा रात्रौजागरणंकृत्वाप्रभातेहोमम[...]
ढ्ढैः पायसेनापिवाव्रती अष्टोत्तरशतंहुत्वाबलिदानंसमाचरेत् वायनंचततोदद्यात्[...]पात्रेनिधायच वटकान्विंशतिसंख्या[...]
तान् आचार्यंपूजयेत्पश्चाद्वस्त्रालंकारधेनुतः ऋत्विजश्चतथादद्यात्कुंभ[...]दक्षिणां विसृज्यचततःपीठमाचार्यायनिवेदयेत् [...]जियेद्व
ततोविप्रान्पायसान्नेनभक्तितः विप्राज्ञांचततोगृह्यस्वयंभुंजीतबंधु[...] इतिश्रीस्कंदपु०उपांगल०व्रतंसमाप्तं अथमाघशुक्लपंच-

पं०

१०२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

म्यांवसंतप्रवृ[illegible]ः सामध्यान्हव्यापिनीग्राह्या दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा मुहूर्तमात्रसत्वेपिपराग्राह्या तत्रविष्णोःपूजाकार्या माघ
सितेपक्षेपंचम्यांपूजयेद्धरिं पूर्वविद्धाप्रकर्तव्यावसंतादौतथैवच तैलाभ्यंगंततःकृत्वाभूषणानिचधारयेत् नित्यंनैमित्तिकंकृत्वागुलालै
र्हरिं[illegible]पान्[illegible]श्चधूपैश्चनैवेद्यैःपूजयेत्तदा नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः स्नक्चंदनसमायुक्तान्ब्राम्हणान्भोजयेत्ततः इतिहेम
सतपंचमीविधिः अथषष्ठीव्रतानि तत्रभाद्रशुक्लषष्ठ्यांललिताव्रतं सामध्यान्हव्यापिनीग्राह्या तद्व्याप्तावव्याप्तौवापूर्वजागरप्रधान
त् कृष्णउवाच भद्रेभाद्रपदेमासिशुक्लषष्ठ्यांशुसंयुतां नारीस्नात्वाप्रभातेतुशुक्लमाल्यांवराशुचिः शुद्धेप्रकारणोपेताभूत्वासंगृह्य
लुकां आनीयवंशपात्रेतुपंचपिंडाकृतींशुभां ध्यात्वातुललितांदेवींतपोवननिवासिनीं पंकजंकरवीरंचनेपालींमालतींतथा नीलोत्पलंकेत
कींचसंगृह्यतगरंतथा एकैकाष्टशतंग्राह्यमष्टाविंशतिरेवच अक्षताःकलिकाग्राह्यास्ताभिर्देवींसमर्चयेत् प्रार्थयेदग्रतोभूत्वादेवींनांगि
शप्रियां गंगाद्वारेकुशावर्तेबिल्वकेनीलपर्वते स्नात्वाकनकलेतीर्थेहरंलब्धवतीपतिं ललितेललितेदेविसौख्यसौभाग्यदायिनी अनंतंदे
सौभाग्यंपुत्रपौत्रप्रवर्धनं मंत्रेणानेनकुसुमैश्चपकैर्बकुलैःशुभैः एवमभ्यर्च्यविधिनानैवेद्यंपुरतोन्यसेत् त्रपुसैरपिकूष्मांडैर्नारीकेलै
र्दाडिमैः बीजपूरैःस्तुंडीरैःकारवेल्लैःसचिर्पिटैः फलैस्तत्कालसंभूतैःकृत्वाशोभांतदग्रतः विरूढैर्धान्यसंभूतैर्दीपिकाभिःसमं
सार्धैःसगुणकैर्धूपैःसोहालीकरंजकैः घृतपक्वैःकर्णवेष्टैर्मोदकैरुपमोदकैः बहुप्रकारैर्नैवेद्यैर्यथाविभवसारतः एवमभ्य-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र॰रा॰
१०२

धिवद्रात्रौजागरणोत्सवं गीतवाद्ययुतैर्नृत्यैःप्रेक्षणीयैरनेकधा सखीभिःसहितासाध्वीतांरात्रिंप्रशमंनयेत् नचसंमीलयेन्नेत्रेनारी

नतुषष्ठयं दुर्भगादुःखिताभवेध्यानेत्रसंमीलनाद्भवेत् एवंजागरणंकृत्वासप्तम्यांसरितंप्रति स्नात्वावस्त्रंपरीधायधार्यंसौभाग्यकुंकुमं

पुष्पादिधूपैश्चगीतवाद्यपुरःसरं तत्प्रदद्याद्द्विजेंद्रायनैवेद्यादिस्कभक्तके ततोगृहंसमागत्यहुत्वावैश्वानरंक्रमात् देवान्पितॄनब्राह्

श्चपूजयित्वास्कवासिनी कन्यकाश्चैवसंभोज्यादीनानंधांश्चभोजयेत् भक्ष्यभोज्यैर्बहुविधैर्दत्वादानानिभूरिशः ललितामेस्तुस्कप्रे

ताइत्युक्त्वातुविसर्जयेत् यःकश्चिदाचरेदेतद्व्रतंसौभाग्यदंपरं षष्ठ्यांतुललितासंज्ञंसर्वपापनिबर्हणं नरोवायदिवानारीतस्यपुण्यफलं

णु यत्तुलब्धव्रतेश्चान्येर्दानैर्वानृपसत्तम तपोभिर्नियमैर्वापितदेतेनहिलभ्यते इहन्वेवातुलासंपत्सौभाग्यमनुभूयच कृत्वामूर्ध्निपदेपा

सपत्नीनांयशस्विनी मृताशिवपुरंप्राप्यदेवैरस्कुरपन्नगैः प्राप्नोतिदर्शनंदेव्यास्तयातुसहमोदते पुण्यशेषादिहागत्यपुण्यसौरव्यैकभाज

भर्त्रासहयुतानारीसीतेवप्रियवल्लभा इदंयःशृणुयात्सार्थपठेद्वासाधुसंसदि सोपिपापविनिर्मुक्तःशक्रलोकेमहीयते षष्ठ्यांजलांत

[illegible]धपुष्पैसंत्वपूजाधितयासिकतांक्रमेण नक्तंवजागरमनुव्रतशेषषष्ठीलाकुर्यादसौत्रिभुवनंललितेभवानी इतिहेमाद्रौललित

व्रतंसमाप्त इदंगुर्जरदेशेप्रसिद्धं अत्रैवभाद्रपदकृष्णाषष्ठ्यांकपिलाषष्ठीव्रतं तत्रयोगविशेषेणपूर्वस्यांवाकार्यं तेचयोगाः

णसमुच्चयेदर्शिताः भाद्रेमास्यसितेपक्षेभानौव्येषकरेस्थिते पातेकुजेन्वरोहिण्यांसाषष्ठीकपिलास्मृता संयोगेतुचतुर्णांच

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रमेष्ठिना अथकोस हेमाद्रौस्कांदे चित्रांगउ० रूपसंपदमारोग्यंसंततिंचातिपुष्कलां प्राप्नुवंतिवरायेननियतंतनहृंदस्वमे अगस्त्य

उवाच साधुसाधुत्वयाप्राज्ञयत्पृष्टोहंश्रुभव्रिव्रत तत्सर्वंकथयिष्यामिततः श्रेयोभविष्यति शृणुपार्थप्रवक्ष्यामिस्वर्गमोक्षप्रदंनृणां

यच्चगुह्यंपुरादेवाब्रह्मरुद्रेंद्रदेवतेः असुराणांचसर्वेषांराक्षसानांतथैवच शंकरेणपुरान्वितत्त्वषण्मुखायनिवेदितं षण्मुखेनममाख्यातं

महापातकनाशनं तद्रक्ष्येब्रह्महागोघ्नः सुरापोगुरुतल्पगः अगारदाहीगरदः सर्वपापरतोपिवा मुच्यतेसर्वपापेभ्यः स्वर्गलोकंचगच्छ

ति यच्चपुण्यंपवित्रंचनृणामद्भुतमंगलं उपकारायलोकानांतथातवनृपोत्तम शृणुभूपमहापुण्यंषष्ठीमाहात्म्यमुत्तमं भाद्रेमास्यसि

तेपक्षेषष्ठीभौमेनसंयुता व्यतीपातेनरोहिण्यासाषष्ठीकपिलास्मृता आश्विनस्यासितेपक्षेमहापुण्यप्रवर्धिनी षष्ठिसंवत्सरस्यांते-

सापुनस्तेनसंयुता चैत्रवैशाखयोर्मध्ये सितेपक्षेशुभोदये वैशाखेपिचराजेंद्रद्वारवत्यांपरास्मृता तस्यांचैवहुतंदत्तंयत्किंचित्प्रतिपा

दितं तस्यसर्वस्यपुण्यस्यसंख्यांवक्तुंनशक्यते यस्मिन्कालेभवेदेतेर्गुणैः षष्ठियुतानदा पंचम्यामेकभक्तंच कुर्यात्तत्रविचक्षणः

षष्ठ्यांप्रातःसमुत्थायकृत्वादौदंतधावनं जलपूर्णांजलिंकृत्वाइमंमंत्रमुदीरयेत् निराहारोद्यदेवेशस्त्वद्भक्तः स्तत्परायणः पूजयिष्यां

म्यहंभक्त्याशरणंभवभास्कर अर्घ्यंदत्वेतिसंकल्पंकृत्वायत्नाच्छुचिस्मितः स्नानंकृत्वाप्रयत्नेननद्यांतीर्थेऽथवेन्हदे तडागेदीर्घिकायां

वागृहेवानियतात्मवान् देवदारुंतथोशीरंकुंकुमेलामनःशिलं पद्मकंपत्रकंयष्टिमधुगव्येनपेषयेत् क्षीरेणालोड्यकल्केनस्नानंकुर्यात्स

रा.
१०४

मंत्रकं आपस्त्वमसिदेवेशज्योतिषांपतिरेवच पापंशमयदेवेशमनोवाक्कायकर्मजं पंचगव्यकृतस्नानः पंचगव्यैस्तुमार्जयेत् आनयेन्मृत्ति
कांशुद्धांस्नानार्थंविप्रयत्नतः मृत्तिकेब्रह्मपूतासि काश्यपेनाभिमंत्रिते पवित्रंकुरुमांनित्यंसर्वपापात्समुद्धर मंत्रेणानेनवरुणंपूजयेद्भ-
क्तिमान्नरः पाशाग्रहस्तवरुणसर्ववारीश्वरप्रभो अद्याहंप्रार्थयामित्वांपूजनार्थंसुरेश्वर आदित्योभास्करोभानूरविः सूर्योदिवाक-
रः प्रभाकरोमितोवीरोदेवःसर्वेश्वरोहरिः गोमयेनोपलिप्तायांभूम्यांवैकुंकुमेनतु मंडलंसर्वतोभद्रमालिखेद्बुद्धिमान्नरः तत्रम
ध्येलिखेत्सम्यगष्टपत्रंसकर्णिकं पूर्वपत्रेन्यसेत्सूर्यमाग्नेयेतपनंन्यसेत् सुवर्णरेतसंयाम्येनैर्ऋत्येचन्यसेद्रविं आदित्यंवारुणेप-
त्रेवायव्येचदिवाकरं सौम्येप्रभाकरंतत्रसूर्यमीशानपत्रके तीव्ररश्मिधरंदेवंब्रह्माणंचैवविन्यसेत् आधाररूपिणंदेवंमध्येचै
वारुणंन्यसेत् सहस्ररश्मिंसूर्यंचसूक्ष्मस्थूलगुणान्वितं सर्वगंसर्वरूपंचमध्येभास्करमेवच सप्ताश्वरथमारूढंपद्महस्तंदिवाक
रं अक्षसूत्रंधनुष्पाणिकुंडलैर्मुकुटेनच रत्नैर्नानाविधैर्युक्तंसौवर्णंतत्रकारयेत् शक्तितस्तुपलादूर्ध्वंतदर्धंकर्षतोपिवा सौवर्णं
मरुणंकुर्याद्रज्जुंचैवतथाविधां सप्ताश्वैर्भूषितंकृत्वारथंतस्याग्रतःस्थितं अरुणंविनतापुत्रंगृहीताश्वमनूरुकं एवंरूपंरथं-
कृत्वापद्मस्योपरिविन्यसेत् तस्योपरिन्यसेद्देवंरक्तवस्त्रविभूषितं रक्तचंदनमाल्यादिमंडितंचातिशोभनं अग्रतःसारथिंकृ-
त्वापूजयेदरुणंशुभैः रक्तपुष्पैस्तुगंधैश्चतथान्यैरपिशक्तितः विनतातनयोदेवःकर्मसाक्षीतमोनुदः सप्ताश्वःसप्तरज्जुश्चअरुण

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मेप्रसीदतु मंत्रेणानेनसंपूज्य सारथिंतदनंतरं देवस्यसंशनंकल्यप्रभूतादिकपंचकं प्रभूतंविमलंसारमाराध्यंपरमंशुभं दीप्तादिशा
न्किभिश्चैवततोभानुंप्रपूजयेत् दीप्तासूक्ष्मातथाभद्रा विंबिनी विमलानघा अमोघावैद्युताचेतिनवमांसर्वतोमुखी अपवित्रः पवित्रो
वासर्वावस्थांगतोपिवा यःस्मरेद्भास्करंदेवंसबाह्याभ्यंतरेशुचिः शिखायांभास्करंन्यस्यललाटेसूर्यमेवच चक्षुर्मध्येन्यसेद्भानुंमुखे
तत्ररविंन्यसेत् कंठेन्यसेद्भानुमंतं पद्महस्तंद्विहस्तयोः तिमिरक्षयकं देवंस्तनयोरेवविन्यसेत् जातवेदाभिधंनाभ्यांकट्याभानुंतथान्य
सेत् उग्ररूपंगुह्यदेशेतेजोरूपंद्विजंघयोः पादयोःसर्वरूपंतुसूक्ष्मस्थूलगुणान्वितं एवंयथोक्तंविन्यस्यपत्रंगृह्यततोर्चयेत् करवी
रार्ककुसुमैरक्तचंदनमिश्रितैः पुष्पैःस्रग्गंधैर्धूपैश्चकुंकुमैरुपशोभितं मार्तंडंभानुमादित्यंभास्करंतपनंरविं हंसंदिवाकरंचेति
पादयोर्मुकुटावधि पादौजंघेतथाजानुद्वयमूरूकटीतथा नाभिंवक्षस्स्थलंशीर्षमेतेष्वंगेषुपूजयेत् आनयेदर्घ्यपात्रंचसौवर्णं
रौप्यताम्रजं अर्घ्यार्थंदैवतंपात्रमुदकेनप्रपूरयेत् पूजयेच्चाथप्रागादिदेवतास्ताःसमाहितः दिग्देवतास्ततःपूज्यागंधपुष्पानुले
पनैः पात्रेतोयंसमादायस्रक्पुष्पफलसंयुतं जानुभ्यामवनिंगत्वासूर्यायार्घ्यंन्यवेदयेत् वेदगर्भनमस्तुभ्यंदेवगर्भनमोस्तुते अ
व्यक्तमूर्तयेतुभ्यंगृहाणार्घ्यंनमोस्तुते ब्रह्ममूर्तिधरायैवचतुर्वक्त्रसनातन सृष्टिस्थितिविनाशायगृहाणार्घ्यंनमोस्तुते कालात्मा
सर्वभूतात्मावेदात्मासर्वतोमुखः जन्ममृत्युजराशोकसंसारभयनाशनः विष्णुरूपधरोदेवःपीतवस्त्रश्चतुर्भुजः प्रभवःसर्वलोका

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रा·
७५

नांगृहाणार्घ्यंनमोस्तुते दारिद्र्यव्यसनध्वंसी श्रीमान्पातुदिवाकरः स्रुवर्णस्फटिकोभानुः स्वर्णरेतादिवामणिः हरिदश्वांशुमाली न अर्घ्यं
गृण्हनमोस्तुते चतुर्भिर्मुनिभिः सम्यगष्टाभिः परिगीयते सामध्वनिस्तुतोयज्ञे अर्घ्यं गृण्हनमोस्तुते अर्घ्यंगंधंचपुष्पंचतथाधूपप्रदीपकं
नैवेद्यंचयथाशक्त्याप्रार्थयेत्सूर्यदैवतं अग्निमीळेनमस्तुभ्यंनमस्तेजातवेदसे इषेत्वेवनमस्तुभ्यंअग्नेचैवनमोनमः आत्मरूपिनमस्तुभ्यं-
विश्वमूर्तेनमोनमः त्वंधातात्वंचवैविष्णुस्त्वंब्रह्मात्वंहुताशनः भुक्तिकामोहमिच्छामिप्रार्थयामिसुरेश्वर विश्वतश्चक्षुराख्यातोविश्व
तश्चरणेनमः विश्वात्मासर्वतोदेवः प्रार्थयामिसुरेश्वर इमंमंत्रंसमुच्चार्यनमस्कुर्वीतिभास्करं संवर्चसेतिपाणिभ्यांतोयेनविमृजेन्मु
खं हंसः शुचिषदित्यर्चासूर्यस्यैवावलोकनं उदुत्यंचित्रमित्येतत्सूक्तंदेवाग्रतोजपेत् पद्मकेसरकोणेषुफलकंचैवकारयेत् फलैःपु
ष्पैरक्षतैश्चभक्ष्यैर्नानाविधैरपि शय्यांतत्रचदेवस्यशुभेदेशेप्रकल्पयेत् षड्धान्यंषड्रसंचैवरौप्यंचैवमहाप्रभुं पुरुषंखड्गहस्तंच
कारयेच्चैवबुद्धिमान् वस्त्रयुग्मेनसंछाद्यलवणोपरिविन्यसेत् अनेनैवतुमंत्रेणस्नानमर्घ्यार्चनंततः नमस्तेक्रोधयुक्तायखड्ग
हस्तजिघांसवे जिघांसंतंचतंहत्वादुःहुःसर्वदेवताः त्वयाव्याप्तंमेरुपृष्ठंचंडभास्करसुप्रभ अतस्त्वांपूजयिष्यामि अर्घ्यंगृण्हन
मोस्तुते क्षपयित्वातुतांरात्रिंगीतवादित्रनिःस्वनैः ततस्त्वभ्युदितेसूर्येहोमंकुर्यात्स्वशक्तितः पूजयेत्तत्रशक्त्याचदेवांश्चविधिव-
द्गुरुं होमोर्कस्यसमिद्भिश्चघृतमिश्रैस्तिलैस्तथा सिद्धान्नंचचरुद्रव्यंघृतंचजुहुयाद्द्विजः आकृष्णेनेतिमंत्रेणशतमष्टोत्तरंक्रमात्

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

द

होमोव्याहृतिभिर्वाथस्विष्टकृसदनंतरं कपिलांपूजयेद्देवींसवत्सांपापनाशिनीं वस्त्रयुक्तांसघंटांचस्वर्णशृंगविभूषितां ताम्रपृष्ठींरौ
प्यखुरांकांस्यदोहनकान्वितां मंत्रेणानेनतांदद्याद्ब्राह्मणायेतिशक्तितः कपिलेसर्वभूतानांपूजनीयासिरोहिणी सर्वतीर्थमयीयस्मा
दतःशांतिंप्रयच्छमे आचार्यस्यततोभक्त्यासर्वंपाणौविनिक्षिपेत् गोभूहिरण्यवासांसिव्रीहयोलवणंतिलाः एतत्सर्वंप्रदत्वातुक-
पिलांप्रार्थयेत्ततः कपिलेपुण्यकर्मासिनिष्पापेपुण्यकर्मणि मामुद्धारयपापात्तुददतोह्यक्षयंकुरु द्विविवादित्रशब्दैश्चसेव्यतेकपि
लासदा तथाविद्याधराःसिद्धाभूतनागगणाग्रहाः कपिलांरोमसंख्यातास्तत्रदेवाःप्रतिष्ठिताः पुष्पवृष्टिंप्रमुंचंतिनित्यमाकाशसंस्थि
ताः ब्राह्मणोत्पादितांदेवीमग्निकुंडात्स्फुरत्प्रभां नमस्तेकपिलेपुण्येसर्वदेवनमस्कृते जयनित्यंमहासत्वेसर्वतीर्थादिमंगले दाता
रंस्वजनोपेतंब्रह्मलोकंनयाशुमां ततःप्रदक्षिणांकृत्वानत्वाब्राह्मणपुंगवान् आशीर्वादान्वदेयुस्तेपुत्रपौत्रधनागमान् आरोग्यं
रूपसौभाग्यंसर्वदुःखविवर्जितः अंतेगोलोकमासाद्यचिरायुःसुखभाग्भवेत् यदास्वर्गात्प्रचरतिराजाभवतिधार्मिकः सप्तद्वीप
वतींभुंक्तेसदाराज्यमकंटकं अहोव्रतमिदंपुण्यंसर्वदुःखविनाशनं अतःपरंप्रवक्ष्यामिदानस्यफलमुत्तमं कपिलाख्यायदाषष्ठीजाय
तेभुविमानद व्रतंसर्वव्रतश्रेष्ठमिदमग्र्यंमहाफलं उद्धरिष्यतिदातारंनूनमक्षय्यमव्ययं एवंदेवगणाःसर्वेभूतसंघामहर्षयः आका
शस्थाःप्रवक्ष्यंतिपुण्येस्मिन्दिवसागमे पात्रभूतायकृपयेश्रोत्रियायकुटुंबिने एवंयःकपिलादद्याद्विधिदृष्टेनकर्मणा सया

दौ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तिपरमंस्थानंयावन्नच्यवतेपुनः उद्यापनविधिंब्रूहिभक्तायममतत्वतः कृष्णउवाच पूर्वस्मिन्दिवसेकुर्यादेकभक्तंसमाहितः शुचौ
देशेसमालिप्यसर्वतोभद्रमंडलं स्थापयेदव्रणंकुंभंचंदनोदकपूरितं संवेष्ट्यवस्त्रयुग्मेनकंठदेशेसुशोभनं पंचरत्नसमायुक्तंदूर्वा
पुष्पाक्षतान्वितं रक्तवस्त्रयुगच्छन्नंताम्रपात्रेणसंयुतं रथंरौप्यफलस्यैवचतुरश्वैर्विचित्रितं सौवर्णीपलसंयुक्तांमूर्तिंसूर्यस्य
कारयेत् कुंभस्योपरिसंस्थाप्यगंधपुष्पैस्तथार्चयेत् आदित्यंपूजयेद्देवंनामभिःस्वैर्यथोदितैः आदित्यंभास्करंभानुंरविंसूर्यं
दिवाकरं प्रभाकरनमस्तुभ्यंसंसारान्मांसमुद्धर भुक्तिमुक्तिप्रदोयस्मात्तस्माच्छांतिंप्रयच्छमे नमोनमस्तेवरदऋक्सामयजु
षांपते नमोस्तुविश्वरूपायविश्वधात्रेनमोस्तुते एवंसंपूज्यविधिवद्देवदेवंदिवाकरं पूजयेत्कपिलांधेनुंवस्त्रमाल्यानुलेपनैः
दानमंत्रः दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मादिवाकरः कपिलासहितोदेवोममसुक्तिंप्रयच्छतु यस्मात्वंकपिलेपुण्येसर्वलोक
स्यपावनी प्रदत्तासहसूर्येणममसुक्तिप्रदाभव इतिहेमाद्रौस्कांदे इतिकपिलाषष्ठीव्रतोद्यापनंसमाप्तं अथकार्तिके-
स्कंदषष्ठीव्रतं हेमाद्रौभविष्ये श्रीकृष्णउवाच षष्ठ्यांफलाशनोराजन् विशेषात्कार्तिकेनृप राज्यच्युतोविशेषेणस्वं
राज्यंलभतेचिरात् षष्ठीतिथिर्महाराजसर्वदासर्वकामदा उपोष्यासाप्रयत्नेनसर्वकालंजयार्थिना कार्तिकेयस्यदयिताए
षाषष्ठीमहातिथिः देवसेनाधिपत्यंहिप्राप्तमस्यांमहात्मना अस्यांहिश्रीसमायुक्तोयस्मात्स्कंदोभवत्पुरा तस्मात्षष्ठ्यांनभुं-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जीतप्राप्नुयाद्भार्गवीं सदा दत्त्वार्घ्यं कार्तिकेयाय स्थित्वा वै दक्षिणामुखः दध्याक्षतोदकैः पुष्पैर्मंत्रेणानेन सुव्रत सप्तर्षिदारज स्कंद
सेनाधिप महाबल रुद्रोमाग्निज षड्वक्त्र गंगागर्भ नमोस्तु ते प्रीयतां देवसेनानीः संपादयतु हृद्गतं दत्त्वा विप्राय चात्मानं यच्चान्य
दपि वर्तते पश्चाद्भुंक्ते त्वसौ रात्र्यां भूमिं कृत्वा तु भाजनं एवं षष्ठीव्रतस्थस्य उक्तं स्कंदेन यत्फलं तन्निबोध महाराज प्रोच्यमाने
मयाखिलं षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति शुक्लायामथ कृष्णायां ब्रह्मचारी समाहितः तस्य सिद्धिं धृतिं
पुष्टिं राज्यमायुर्निरामयं इहलोके परत्रापि दद्यात्स्कंदो न संशयः अशक्तश्चोपवासे वै तेन नक्तं समाचरेत् तैलं षष्ठ्यां न
भुंजीत न दिवा कुरुनंदन यस्तु षष्ठ्यां नरो नक्तं कुर्याद्वरनसत्तम सर्वपापैर्विनिर्मुक्तो गांगेयस्य प्रसादतः स्वर्गे च नियतं वा
सौ लभते नात्र संशयः इह चागत्य कालांते यथोक्तफलभाग्भवेत् देवानामपि वंद्योसौ राजराजो भविष्यति इति स्कं-
दषष्ठीव्रतं भविष्योक्तं संपूर्णं अथ मार्गशीर्षशुक्ले भाद्रपदे वा चंपाषष्ठीव्रतं हेमाद्रौ स्कांदे स्कंद उवाच
प्राप्तराज्यं च राजानं धर्मपुत्रं युधिष्ठिर कदाचिद्रायया(?)द्रष्टुं दुर्वासा मुनिसत्तमः तं पप्रच्छ महातेजा धर्मसूनुः कृतांजलिः
राज्यलाभः कथं जातो मम विप्र तपोनिधे तद्वृत्तं श्रोतुमिच्छामि कर्तुं च मुनिसत्तम दुर्वास उवा० शृणु राजन्महाभाग
व्रतानामुत्तमं व्रतं अस्तीह यच्चीर्णमात्रं सर्वकामांस्तु पूरयेत् सर्वपापक्षयं कुर्यादखंडितव्रतान्यपि षष्ठी भाद्रपदे शुक्ला

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वैधृत्याचसमन्विता विशाखाभौमयोगेनसाचंपाइतिविश्रुता देवासुरमनुष्याणांदुर्लभाषष्ठिहायनैः कृतेत्रेतायांपं-
चाशद्धायनीद्वापरेपुनः चत्वारिंशत्कलौत्रिंशद्धायनीदुर्लभाततः आदौकृतयुगेपूर्वंपत्नीप्राप्ताविश्वकर्मणा तत्फलाद्विश्व
कर्तृत्वंप्रजापत्यमवाप्नुयात् पृथुनाकार्तवीर्येण भुविनारायणेनच ईश्वरेणमयासार्द्धंइतरेतरलिप्सया यश्चैतद्विधिवत्कुर्या
त्सोत्ययंतंफलमश्नुते युधिष्ठिरउवाच तद्विधिंश्रोतुमिच्छामिविस्तराद्वदतोमुने केमंत्राःकेचनियमाःसापिकिंलक्षणा
भवेत् दुर्वासाउवाच हिदेवत्यक्षभौमेनवैधृतेनसमन्विता भाद्रेमासिसितेषष्ठीसाचंपेतिनिगद्यते पंचम्यांनियमेकुर्या
देकभुक्तंसमाचरेत् चंपाषष्ठीव्रतंकुर्याद्यथोक्तंवचनात्कुरोः ततःप्रभातेविमलेदंतधावनपूर्वकं कृत्वास्नानंशुचिर्भूत्वासंकल्प्य
चयथाविधि निराहारोद्यदेवेशत्वद्भक्तस्त्वत्परायणः पूजयिष्याम्यहंभक्त्याशरणंभवभास्कर संकल्पमंत्रः ततःस्नानंप्र
कुर्वीतनद्यादौविमलेजले मृदमालभ्यमंत्रेश्चतिलैःशुक्लैश्चमंत्रवित् सावित्रंपरमंत्वंहिपरंधामजलेमम त्वत्तेजसापरिभ्रष्टं
पापंयातुसहस्रधा प्रार्थना आद्यंतमसिदेवेशज्योतिषांपतिरेवच पापंनाशयमेदेववाङ्मनःकर्मभिःकृतं स्नानमंत्रः
ततःसंतर्पयेद्देवानृषीन्पितृगणानपि ततश्चैत्यगृहंमौनीपाखंडालापवर्जितः स्थंडिलंकारयेच्छुद्धंचतुरस्रंसुशोभनं
स्थापयेदव्रणंकुंभंपंचरत्नसमन्वितं कुंकुमेनलिखेत्पद्मंद्वादशारंसकर्णिकं तस्योपरिन्यसेत्सूर्यंसौवर्णंसरथारुणं शक्त्यावावि-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्तसारेण वित्तशाठ्यविवर्जितः तमर्चयेद्गंधपुष्पैर्विधिमंत्रपुरःसरं पंचामृतेनस्नपनंकुर्यादर्कस्यसंयुतः ततस्तुगंधतोयेनपरांपूजा
मारभेत् गंधैर्नानाविधैर्दिव्यैःकर्पूरागरुकुंकुमैः फलैर्नानाविधैर्दिव्यैःकुंकुमैश्चसुगंधिभिः मंडपंकारयेत्तत्र पुष्पमालाविभूषितं
यथाशोभंप्रकुर्वीत अधश्चोपरिसर्वतः ततःसंपूजयेद्देवंभास्करंकमलोपरि मध्येदलेषुपूर्वादि त्वादित्यादीन्सपूजयेत् आदि-
त्याय॰ भास्कराय॰ भानवे॰ अर्यम्णेन॰ विश्वचक्राय॰ अंशुमते॰ सहस्रांशवे॰ खगाय॰ सुराराध्याय॰ सूर्याय॰ द्वादशात्मने॰ प्र-
भाकराय॰ १२ जन्मांतरसहस्रेषुदुष्कृतंयन्मयाकृतं तत्सर्वंनाशमायातुत्वत्प्रसादाद्दिवाकर ततोरथपूजा ततःसंपूजयेद्देवमच्यु
तंतद्रथेस्थितं अष्टाक्षरेणमंत्रेणगंधपुष्पादिभिःक्रमात् मंत्रः ॐघृणिःसूर्यआदित्यः इतिमंत्रः कालात्मासर्वभूतात्मावेदा-
त्माविश्वतोमुखः जन्ममृत्युजरारोगसंसारभयनाशनः उदयेअर्घ्यमंत्रः ततःसंपूजयेच्छुक्लांसवत्सांगांपयस्विनीं सवस्त्रघंटा
भरणांकांस्यपात्रेचदोहिनीं ब्रह्मणोत्पादितेदेविसर्वपापविनाशिनी संसारार्णवमग्नंमांगोमातस्त्रातुमर्हसि सुरूपाबहुरूपा
श्चमातरोलोकमातरः गावोमामुपसर्पंतुसरितःसागरंयथा यालक्ष्मीःसर्वदेवानांयाचदेवेषुसंस्थिता धेनुरूपेणसादेवीममपापं
व्यपोहतु तिलहोमंततःकुर्यात्सावित्र्याष्टोत्तरंशतं ततस्तांकल्पयेद्धेनुंसद्योमेप्रीयतामपि आचार्याय ततोदद्यादादित्यंसरथा
कृर्णं सकुंभरक्तवस्त्रैश्चसर्वोपस्करसंयुतं मनोभिलषितावाप्तिंकरोतुममभास्करः दानमंत्रः गृण्हामि[illegible]भास्कररवेभवंतंविश्व

लोमुखं मनोभिलषिताबासिसुभयोः कर्तुमर्हसि मनिग्रह्य णमंत्रः सर्वतीर्थमयीधेनुंसर्वयज्ञमयीशुभां सर्वदानमयींदेवींब्राह्म-
णायप्रददाम्यहं गोदानं गृह्णामिरुक्रमींदेवीं सर्वयज्ञमयींशुभां उभौपुनीहिवरदे उभयोस्तारकाभव ततस्तुभोजयेद्विप्रान्द्वादशैवस्व
शक्तितः दद्याच्चदक्षिणांतेभ्यः प्रणिपत्यविसर्जयेत् अवैकल्पंभवेत्तस्यशांतिमाप्नुहिद्विजोत्तम अभिनंद्यततमाशीर्भिस्तेसर्वेअभि
नंदिताः ततस्तुस्वयमश्नीयाद्द्विजानामवशिष्टकं सहपुत्रैःकलत्रैश्चअन्यैर्बहुजनैर्वृतः एवंयःकुरुतेराजन्सोत्यंतंपुण्यमश्नुते प्रभूणां
चविधिःप्रोक्तःसर्वेषांदृष्टिगोचरः सर्वैश्चतत्कृतंकार्यंस्वशक्त्याद्धुःखभीरुभिः प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्तते विफलंतस्यत
स्यास्यदनुशस्त्वनुकल्पिकः अथनिर्धनस्यविधिः पंचम्यांनियमंकुर्यादाचार्यवचनात्कृती षष्ठ्यांस्नानंप्रकुर्वीतसंतर्प्यपितृदेव
ताः अभ्येत्यस्वगृहंमौनि सूर्यंमनसिचिंतयेत् स्थापयेदव्रणंकुंभंमृत्पात्रंचततोपरि तस्योपरिन्यसेत्सूर्यंफलकेनविनिर्मितं सौ-
र्णंभक्तिसंयुक्तंरथंसारथिनायुतं तमर्चयेज्जगन्नाथंगृहीत्वाज्ञांगुरोःस्वयं षडक्षरेणमंत्रेणगंधपुष्पाक्षतादिभिः ॐनमःसूर्या
येतिमंत्रः संपूज्यविधिवद्देवंफलपुष्पादिकंचयत् सूर्यंनिवेदयेत्सर्वंसूर्योमेप्रीयतामिति ततःप्रभातेविमलेगत्वागुरुगृहंप्रति स
र्वोपकरणैःसूर्यमाचार्यायनिवेदयेत् धान्यंपुष्पंफलंवस्त्रंरत्नधेन्वादिकंचयत् गवांकोटिसहस्रंतुकुरुक्षेत्रेर्कपर्वणि चंपादानस्यरा
जेंद्रकलांनार्हंतिषोडशीं सर्वतीर्थप्रदानानितथान्यान्यपिषोडश चंपयातुलितानीहचंपकात्वतिरिच्यते इतिश्रीस्कंदपुराणेचंपा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

षष्ठीव्रतंसंपूर्णं अथमार्गशीर्षशुक्लचंपाषष्ठी मार्गेमासेशुक्लपक्षेषष्ठीवैधृतिसंयुता रविवारेणसंयुक्तासाचंपाइ[illegible]
ता इतिमल्लारीमाहात्म्ये मार्गशीर्षेमलेपक्षेषष्ठ्यांवारेशुमालिनः शततारागतेचंद्रेलिंगस्याहृष्टिगोचरमिति इयंयो[illegible]
णपूर्वायोगाभावेपराग्राह्या इतिचंपाषष्ठी अथसप्तमीव्रतानि तत्रवैशाखशुक्लसप्तम्यांगंगोत्पत्तिः तत्रपूजाचो[illegible]
वीचंद्रोदयेब्राह्मे वैशाखशुक्लसप्तम्यांजन्हुनाजान्हवीस्वयं क्रोधात्पीतापुनस्त्यक्ताकर्णरंध्रात्तुदक्षिणात् तांतत्रपूजयेद्दे[illegible]
गांगगनमेखलां इतिहरिवंशेपुण्यकव्रताते अब्दप्रातःस्नानमभिधायगंगायाव्रतकथामहायशस्करीउक्ता मत्स्यूषेचसदा[illegible]
न कार्यमंदाकिनीजले अन्यत्रवाजलेस्नानंशुक्लपक्षेहरिप्रिये एतद्गंगाव्रतंनामसर्वकामप्रदंशुभं सप्तसप्तसुसेषाथकुल[illegible]
निहरिवल्लभे स्त्रीतारयविधर्मज्ञेगंगाव्रतकचारिणी देयंकुंभसहस्रंतुगंगायाव्रतकेशुभे तारणंसिद्धिदंचैवतद्व्रतंसर्वकामिन-
कं वैशाखेशुक्लपक्षेतुसप्तम्यांपूजयेद्धरिं गंगायांविधिवत्स्नात्वाभोजयेब्राह्मणांदश पूजयेत्सूक्ष्मवस्त्रैश्चपुष्पस्त्रक्चंद-
नैशुभैः पूजकःसर्वपापेभ्योमुच्यतेनात्रसंशयः अयंचशिष्टाचारात् मध्यान्हव्यापिनीग्राह्या दिनद्वयेतद्व्याप्तौएकदेशव्याप्तौवा
पूर्वायुग्मवाक्यात् इतिगंगासप्तमीव्रतं अथशुक्लादिश्रावणकृष्णासप्तम्यांशीतलाव्रतं तच्चमध्यान्हव्यापिन्यांकार्यं तच्चमाध
वीयेहारीतः पूजाव्रतेषुसर्वेषुमध्यान्हव्यापिनीतिथिरिति अथव्रतविधिः मासपक्षाद्युल्लिख्य ममइहजन्म[illegible]जन्मांतरेचअवै

ब्र-रा-
१०९

धव्यप्राप्तयेअखंडितभर्तृसंयोगपुत्रपौत्रादिधनधान्यप्राप्तयेशीतलाव्रतंकरिष्ये [illegible]चयथाशक्तितोपचारैः शीतलां[illegible]यष्ये तत्रअष्टद
लपीठेअव्रणंकलशंसंस्थाप्य तदुपरिसौवर्णींशीतलांपूजयेत् अथध्यानंस्कांदे [illegible]देवींरासभस्थांदिगंबरां मार्जनीकलशो
पेतांशूर्पालंकृतमस्तकां कुंभेसंस्थापयेद्देवींपूजयेन्नाममंत्रतः शीतलेदहमेपाप[illegible]सौख्यफलप्रदे धनधान्यप्रदेदेवीपुजांगृण्ह
नमोस्तुते इतिध्यानं आवाहनं आसनं पाद्यं विधायशीतलाकारिअवैधव्यशीतप्रदे श्रावणस्यसितेपक्षेअर्घ्यंगृण्हनमोस्तु
ते अर्घ्यं नाममंत्रेणपूजनीया आचमनं स्नानं वस्त्रं उपव० विलेपनं अलंकारान् पुष्पा० धूपं० दीपं शीतलेदं च[illegible]को[illegible]दध्यो
दनयुतंशुभं नैवेद्यंगृह्यतांदेविघृतमिश्रंचसुंदरि संपूज्यसप्तगौरीश्चभोजयेच्चप्रयत्नतः नैवेद्यं० करोद्वर्तनं० फलं
लं दक्षिणां नीराजनं पुष्पांजलिं० प्रदक्षिणां नमस्का० व्रतसंपूर्णफलावाप्तयेब्राह्मणायवायनं तत्रमंत्रः दध्यन्नं
णायुक्तंवायनंफलसंयुतं शीतलाप्रीतयेतुभ्यंब्राह्मणायददाम्यहं इतिपूजनं अथकथा हेमाद्रौभविष्ये कृष्ण
प्रसिद्धंश्रूयतांरम्यंनगरंहस्तिनापुरं इंद्रद्युम्नश्चराजाभून्नृपतिर्लोकपालकः धर्मशीलाभिधाचासीत्तस्यभार्याचशा
[illegible]कांडेरतासाध्वी दानशीलाप्रियंवदा बभूवप्रथमःपुत्रोमहाधर्मेतिनामतः नंदतेपितृवात्सल्यात्कालेन्यस्मिन्ततो
तीया[illegible]याप्रुत्रीतस्यजातागुणोत्तमा पुत्रीलक्षणसंपन्नाशुभकारीतिनामतः ववृधेसापितुर्गेहेसर्वांगगुणसुंदरी

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यंजग्मुर्ब्राह्मणीपतिरक्षणात् ब्राह्मणीहर्षितांवृद्धांप्रणिपत्यपतिव्रता देहिमातर्नमस्तेस्तुअवैधव्यावियोगता अन्यापिशी
तलायास्तुव्रतंनारीकरिष्यति अवैधव्यमदारिद्र्यमावियोगःस्वभर्तृतः तथेत्यंतर्दधेदेवीशीतलाकामरूपिणी शीतलायावरंल
ब्ध्वाजगामात्मीयवेश्मनि पद्मानिवासप्रभुविश्ववंद्यसमर्हणासाधितविश्वमंगला प्रसादमासाद्यचशीतलायानित्योत्सवा
नावर्तितवद्बभूव इतिभविष्येशीतलव्रतंसंपूर्णं अथभाद्रशुक्लसप्तम्यांमुक्ताभरणव्रतंहेमाद्रौभविष्ये सामध्यान्हव्यापि
नीग्राह्या तद्यथासावव्याप्तौपरा ममइहजन्मनिअखंडितसंततिपुत्रपौत्रवृद्धयेमुक्ताभरणाव्रतेउमामहेश्वरपूजनंकरिष्ये अथ
ईशानपरमात्मन्जगद्गुरो प्रतिपादितयासोमपूजयापूजयाम्यहं आवाहनं अनेकरत्नखचितंसौवर्णमणि
तंमहादेवगृहाणासनमुत्तमं आसनं पाद्यंगृहाणदेवेशसर्वविद्यापरायण ध्यानगम्यसतांशंभोसर्वेश्वरनमो
मर्घ्यमनर्घ्यंत्वममराधीशशंकर किंकरीभूतयासोममयादत्तंगृहाणभोः अर्घ्यं गंगादिसर्वतीर्थेभ्यःसमानी
तलमाचमनीयार्थंगृहाणउमयासह आचमनीयं० मध्वाज्यशर्करामिश्रमधुनापरिकल्पितः शंकरप्रीतयेतुभ्यं
तः मधुपर्कं० पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंप्रीयतांपरमेश्वरः पंचामृतस्नानं० गंगाच
रिसरस्वती नर्मदासिंधुकावेरीस्नानार्थंप्रीतगृह्यतां० शुद्धोदकस्नानं स्नानादूर्ध्वंमहादेवप्रीत्यापापप्रणाशन

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गृह्यतांकांतयासह वस्त्रं उपवीतंसोत्तरीयंनानाभूषणभूषितं गृहाणसोमविमलंमयादत्तमिदंशुभं उपवीतं म
घनसारंसुगंधियुक्तं चंदनंपंचवदन गृहाणवनितासह चंदनं जातीचंपकपुन्नागबकुलैःपारिजातकैः शतपत्रै
र्हसुमापतिं पुष्पाणि त्रैलोक्यपावनंतेद्यपरमात्मन्जगद्गुरो चंदनागरुकर्पूरधूपदास्यामिशंकर धूपं शुभव
र्तिंडितंवन्हिनायुक्तं दीपमेकमनेकार्कभातिमंकलयातिम दीपं पयसापूपकृसरंदुग्धान्नंसगुडोदनं दिव्यान्नंषड्रसोपे
न्वितं समर्पयामिदेवेशकिंकरीशंकरायते नैवेद्यं पुनराचमनंशुद्धंकुरुसोमांबुनामुना मुखशुद्धिकरंदेवरूप
आचमनीयं कस्तूरीकासमायुक्तंमलयाचलसंभवं गृहाणचंदनंसोमकरोद्वर्तनकंशुभं करोद्वर्तनं नारी
केरफलजंबूफलंनारिंगमुत्तम कूष्मांडपूरतोभक्त्याकल्पितंप्रतिगृह्यतां फलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां
नीराजनं पुष्पांजलिं॰ प्रदक्षिणां नमस्कारं महादेवमहाराजप्रीत्यापापप्रणाशन अस्माकंकुर्वतोपूजाभवतासाधुयोजिता
ज्ञानतोज्ञानतोवापिभवतोविहिताचया संपूर्णासातुविश्वेशाविमलात्वत्प्रसादतः इतिप्रार्थना देवदेवजगन्नाथसर्वसौभाग्यदा-
यक गृण्हीयंदोरकंरूपंपुत्रपौत्रप्रवर्द्धनं दोरकग्रहणं सप्तसामोपमीतंत्वांधारयामिजगद्गुरो सूत्रग्रंथिस्थितंनित्यंधारयामिस्थि
रोभव इतिदोरकबंधनं हरपापानिसर्वाणितुष्टिंकुरुदयानिधे प्रसन्नःसन्नुमाकांतदीर्घायुःपुत्रदोभव इतिजीर्णदोरकोत्तारणं अथ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तस्यातद्व्रतंविस्मृतंशुभं चंद्रमुख्याःप्रमत्तायाविस्मृतःसूत्रदोरकः भद्रमुख्यास्तथाभद्रेविस्मृतंसर्वमेवतत् मृताकैश्चिदहोरात्रैःसावभूव
पुवंगमी भद्राख्याकुक्कुटीजाताव्रतभंगाच्छुभानने संभूयभूयःसमयंप्राक्व्रतंनकृतुःसदा कालेनपंचतांप्राप्तेसखीभावात्सहैवते अ
देवमातृकेदेशेजातागोकुलसंज्ञके भद्राख्याब्राह्मणीजातायासीच्चंद्रमुखीपरा नाम्नाभद्रमुखीयासाभूषणानामसाभवत् अग्निमीळस्य
सादत्तापित्रातस्यपुरोधसः अतीववल्लभाचासीद्भूषणाभूषणप्रिया भूषिताभूषणवरैरूपेणालंकृतास्वयं तस्यांबभूवुरष्टौचसु
ताःसर्वगुणान्विताः मातृवद्रूपसंपन्नाःपितृवद्धर्मशालिनः सख्यौतेतेनतद्व्रत्वजातेजातिस्मरेकिल पुनर्निरंतराप्रीतिस्तयोरा-
सीद्यथापुरा कालेबहुतिथेजातेजातासंत्यक्तयौवना मध्येवयसिराज्ञीसापुत्रमेकमजीजनत् ईश्वरीरोगिणंमूकंप्रज्ञाहीनंचवि
स्तरं तादृशोपिमहाभागेमृतोसौनववार्षिकः ततस्तांभूषणादृष्टमीश्वरीपुत्रदुःखितां सखीभावादतिस्नेहात्पुत्रैःस्वैःपरिवा
रिता अमुक्ताभरणाभद्रास्वरूपेणैवभूषिता साहिभद्राद्विजस्यांभूद्भार्याभूषणनामिका पुराहितस्याःकालेनकुक्कुटीबहु-
पुत्रिणी तादृस्त्वानादृशीभव्यांप्रजज्वालेश्वरीरुषा ततोगृहंप्रेषयित्वाब्राह्मणींतीव्रमत्सरा चिंतयामाससाशीघ्रंतस्याःपुत्रवधम्
ति निश्चित्यचेतसाक्रूराघातयामासतत्सुतान् हताहताश्चतेपुत्राःपुनर्जीवंत्यनामयाः तदद्भुततरंदृष्ट्वासखीमाहूयभूषणा उप
विश्यासनेश्रेष्ठेबहुमानपुरःसरं अपृच्छद्विस्मयाविष्टाराज्ञीसानृपवल्लभा ब्रूहितथ्यंमहाभागेकिंत्वयासुकृतंकृतं दानव्रतंतपो



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वायनं मंडकान्सफलान्युक्तान् सघृतान्दक्षिणायुतान् एकादशशतंकृत्वा ब्राह्मणायकुटुंबिने वेदशास्त्रप्रवीणायदद्यात्सोमस्यतुष्ट-
ये शंकरःप्रतिगृण्हातिशंकरोवैददातिच शंकरस्तारकोभाभ्यांशंकरायनमोनमः इतिवायनं एवंयापूजनंकुर्यात्सोमस्यकृत्स्नदस्यच
सर्वान्कामानवाप्नोतिपुत्रपौत्रैश्चमोदते प्रार्थना इतिपूजा अथकथा श्रीकृष्णउ० मुनींद्रोलोमशोनामम थुरायांगतःपुरा सोर्चितो-
वसुदेवेनदेवक्यात्वयुधिष्ठिर उपविष्टः कथाःपुण्याः कथयित्वामनोरमाः ततः कथयितुंभूयः कथामेतांप्रचक्रमे कंसेनतेहताःपुत्राः-
जाताजाताःपुनःपुनः मृतवत्सादेवकित्वंपुत्रदुःखेनदुःखिता यथाचंद्रमुखीदीनाबभूवनहुषप्रिया पश्चाच्चीर्णव्रतान्चैवबभूवतत्रवत्स
का त्वमपिदेवकितथाभविष्यसिनसंशयः लोमशउवाच अयोध्यायांपुराराजानहुषोनामविश्रुतः तस्यस्त्रीरूपसंपन्नादेवीचंद्रमुखी
प्रिया तथातस्यैवनगरेविष्णुगुप्तोभवद्द्विजः आसीद्गुणवतीतस्यपत्नीभद्रमुखीतथा तयोरासीदतिप्रीतिः स्पृहणीयापरस्परं अ
थतेद्वेअपिसख्योस्नानार्थंशरयूजले प्राप्तमाप्ताश्चतत्रैवबह्व्योवैनगरांगनाः ताः स्नात्वामंडलंचक्रुस्तन्मध्येव्यक्तरूपिणं लेपयित्वा-
शिवंशांतमुमयासहशंकरं गंधपुष्पाक्षतैर्भक्त्यापूजयित्वायथाविधि प्रणम्यगंतुकामास्ताः पप्रच्छतुरुभेस्त्रियौ ताऊचुः अस्मा
भिः शंकरोदेवःपार्वत्यासहपूजितः बध्वासूत्रमयंतंतुंशिवस्यात्मानिवेदितः धारणीयमिदंतावद्यावत्प्राणविधारणं तासांतद्व-
चनंश्रुत्वासख्यौतेचापिदेवकि कृत्वाचसमयंतत्रबध्वादोर्भ्यांसदोरकं ततस्ताश्चगृहंजग्मुःस्वसखीभिःसमावृताः कालेनमहता

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वापिशश्रूषणमुपोषणं येनतेनिहताःपुत्राःपुनर्जीवित्यनामयाः तथाहिबहुपुत्राचजीवद्वत्साशुभानना अभुक्ताभरणानित्यं
भर्त्तुश्चैत्तस्यवस्थिता अतीवशोभसेभद्रेविद्युद्देवयथांबरे भूषणोवाच शृणुदेविप्रवक्ष्यामिजन्मांतरविचेष्टितं किंतद्विस्मृतं
सर्वंमयोध्यायांकृतंहियत् आवाभ्यांव्रतवैकल्यंप्रमत्ताभ्यांवरानने येनत्वंपूर्वंगीजाताजाताहंकुक्कुटीतथा तथापिव्रतवैकल्यं
त्वयाचापल्यतःकृतं मयातुसर्वभावेनचेतसाध्यायशंकरं तिर्यग्योन्यनुसारेणमनोवृत्त्यात्यनुष्ठितं एतद्विकारणंभद्रेनान्यत्कि
चित्करोम्यहं लोमशउवाच इत्याकर्ण्यवचःस्मृत्वापूर्वजन्मविचेष्टितं ईश्वरीचतयासार्द्धंपुनःसम्यक्चकारह व्रतस्यास्यप्रभावेनपु
त्रपौत्रादिसंभवं भुक्त्वातुसौख्यमतुलंमृताशिवपुरंगता तस्मात्वमपिकल्याणिव्रतमेतत्समाचर आरब्धेस्मिन्व्रतेदिव्येश्रीवत्सुप्र
भविष्यसि देवक्युवाच ब्रह्मन्नाख्याहिमेसम्यक्व्रतमेतत्सुखप्रदं संतानवृद्धिकरणंशिवलोकस्थितिप्रदं लोमशउ० भद्रेभाद्र
पदेमासिसप्तम्यांसलिलाशये स्नात्वाशिवंमंडलकेलेखयित्वासहांबिकां तत्रसंपूज्यसमयंकुर्याद्बध्वाकरेगुणं यावज्जीवंमयात्मा
तुशिवस्यविनिवेदितः इत्येवंसमयंकृत्वाततःप्रभृतिदोरकं सौवर्णंराजतंवापिसूत्रंवाधारयेत्करे मंडकान्वेष्टितान्दद्यान्मासेपक्षेथ
वाब्दके स्वयंतांश्चैवभुंजीतव्रतभंगभयाच्छुभे प्रतिमासंतुसप्तम्यांशुक्लपक्षेविशेषतः कुर्यादेवंव्रतंभद्रेवर्षांतेपितुदेवकी कारि
तामुद्रिकाशैवीहैमीरूप्यास्वशक्तितः ताम्रपात्रोपरिस्थाप्यब्राह्मणायनिवेदयेत् आचार्यायविशेषेणसुवर्णस्यांगुलीयकं पुष्पंकु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र·रा·
११२

स्रुमसंयुक्तंतांबूलांजनसूत्रकैः सहार्थैस्तृतीया एवंतत्कारयित्वातुव्रतंसंततिवर्धनं सर्वपापविनिर्मुक्तंभुक्त्वासौरव्यमनामयं संतानं
वर्धयित्वाचशिवलोकेमहीयते एतत्तेसर्वमारव्यानंमारव्यातंव्रतमुत्तमं कुरुदेवकियत्नेनजीवत्पुत्राभविष्यसि कृष्णउवाच इत्युक्ता
तुमुनिश्रेष्ठस्तत्रैवांतरधीयत चकारसर्वंयत्नेनयदुक्तंतत्रधीमता व्रतस्यास्यप्रभावेनदेवकीनामअजीजनत् तस्मात्पार्थनरैःका
र्यंस्त्रीभिःकार्यंविशेषतः व्रतपापप्रशमनंस्रुरवसंततिवर्धनं एवंयःश्रृणुयाद्भक्त्यायश्चैनत्प्रतिपादयेत् व्रतमारव्यानसहितंसो
पिपापैःप्रमुच्यते आरव्यानकंव्रतमिदंस्रुरवसौरव्यकामायास्त्रीकरिष्यतिशिवंहृदयेनिधाय दुःरवंविहायबहुशोगतकल्मषौघासा
स्त्रीव्रताद्भवतिशोभनजीववत्सा इतिहेमाद्रौभविष्येमुक्ताभरणसप्तमीव्रतंसंपूर्णं अथआश्विनशुक्लसप्तम्यांसरस्वतीपूजा
साउदयव्यापिनीग्राह्या युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया रवेरुदयमीक्षंतेलतास्रुतिथियुग्मके प्रतापमार्तंडेभविष्योक्तेः
वर्षवृद्धिर्जन्मतिथि/स्तत्रैवमूलनक्षत्रेपुस्तकस्थापनमुक्तं रुद्रयामले मूलऋक्षेस्रुधाधीशपूजनीयासरस्वती पूजयेत्प्रत्यहंया
वत्श्रवणांतेविसर्जयेत् नाध्यापयेन्नचलिरवेन्नाधीयीचकदाचन पुस्तकेस्थापितेदव्याविद्याकामोद्विजोत्तमः अहंभद्राचभद्रा
हंनावयोरंतरंक्वचित् सर्वसिद्धिप्रदास्यामिभद्रायांत्वयिर्विनास्म्यहं आश्विनस्यसितेपक्षेमेधानामसरस्वती मूलेनावाहयेद्देवींश्रव
णेनविसर्जयेत् इतिसरस्वतीपूजनं अथरथसप्तमीव्रतं अस्यांस्नानविधिः तच्चअरुणोदयव्यापिन्यांकार्यं तदुक्तंमदनरत्नेस्म

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निसंग्रहे सूर्यग्रहणतुल्यासाशुक्लामाघस्यसप्तमी अरुणोदयवेलायांस्नानंतत्रमहत्फलं माघेमासिसितेपक्षेसप्तमीकोटिपुण्यदा कु
र्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः दिनद्वयेअरुणोदयव्यापित्वेपूर्वैव सौवर्णेराजतेताम्रेभक्त्यालाबुमयेतथा तैलेनवर्तिदीतव्या
महापात्रेतुरंजिता समाहितमनाभूत्वादीपंशिरसिधारयेत् भास्करंहृदयेध्यात्वाइमंमंत्रमुदीरयेत् नमस्तेरुद्ररूपायरसानांपतयेनमः
अरुणारुणनमस्तेस्तुहरिदश्वनमोस्तुते जलोपरिदीपांस्तीर्त्वासंतर्प्यपितृदेवताः लोलार्करथसप्तम्यांस्नात्वागंगादिसंगमे सप्तज
न्मकृतैःपापैर्मुक्तोभवतितत्क्षणात् इतिगर्गः षष्ठीसप्तमीयोगेवारथारूढांशुमालिनः योगोयंपद्मकोनामसहस्रार्कग्रहैःसमः एतच्च
स्नानंतिथ्यादिस्मरणानंतरंशिष्टाचारात् सप्तार्कपत्राणिसप्तबदरीपत्राणिशिरसिनिधाय तत्रमंत्रः यद्यज्जन्मकृतंपापं[illegible]यासप्तसुज
न्मसु तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी स्नानानंतरमर्घ्यंचदातव्यंमंत्रपूर्वकं सप्तसप्तावहप्रीतसप्तलोकप्रदीपन स[illegible]म्यासहितः
तोदेवगृहाणार्घ्यंदिवाकर अर्घ्यं जननीसर्वभूतानांसप्तमीसप्तसप्तिके सप्तव्याहृतिकेदेविनमस्तेसूर्यमंडले प्रार्थन[illegible] इतिस्नान
विधिः अनेनैवतुमंत्रेणपूजयेच्चदिवाकरं कृत्वाषोडशधाराजन्सप्ताश्वरथमंडले अथकथा युधिष्ठिरउवाच कथंसाक्रि
यतेकृष्णमनुष्यैरयसप्तमी चक्रवर्तित्वफलदायाहिख्यातात्वयामम श्रीकृष्णउवाच आसीत्कांबोजविषयेयशोवर्मानरा
धिपः वृद्धेवयसितस्यासीत्सर्वव्याधियुतःसुतः तत्कर्मपापंसोपृच्छद्विनीतंद्विजपुंगवं सप्राहराजन्वैश्योयंकृपणःपूर्व

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जन्मनि दर्दर्शरथसप्तम्याःक्रियमाणंव्रतंनृप व्रतदर्शनमाहात्म्यादुत्पन्नोजठरेतव अ दाताविभवेयस्मात्तस्मात्सव्याधितोभव-
त् ततःसराजापप्रच्छ किमेतत्स्यविधीयतां यस्यसंदर्शनात्प्राप्तोलोभीस्थानमनुत्तमं ब्राह्मणउवाच तद्वैक्रियतांराजन्र-
थसप्तमिसंज्ञितं व्रतंपापहरंयेनचक्रवर्तित्वमाप्यते राजोवाच ब्रूहिविप्रव्रतंकृत्स्नसविधानंसमंत्रकं रोगिणांचदरिद्राणांस
र्वसंपत्प्रदायकं द्विजउवाच शुक्लपक्षेतुमाघस्यषष्ठ्यामामंत्रयेद्गृही स्नानंशुक्लतिलैःकार्यं नद्यादौविमलेजले [illegible]पीकूपत
डागेषुविधिवद्दूर्णधर्मतः देवादीन्पूजयित्वातुनत्वासूर्यालयंगतः सूर्यंपूज्यनमस्कृत्यपुष्पधूपाक्षतैःशुभैः [illegible]गत्यगृ
वनपश्चात्पंचयज्ञांश्चनिर्वपेत् संभोज्यातिथिभृत्यांश्चबालकानांश्रितान्स्वयं विद्यमानेदिनेश्रीयाद्राग्यतस्तैः [illegible]वर्जितं
रात्रौविप्रान्समाहूयसर्वज्ञान्वेदपारगान् संपूज्यनियमंकुर्यात्सूर्यमाधायचेतसि सप्तम्यांतुनिराहारोसर्वभोगविव-
र्जितः भोक्ष्येषष्ठ्यांजगन्नाथनिर्विघ्नंतन्मेकुरु इत्युच्चार्यनृपश्रेष्ठतोयंतोयेषुनिक्षिपेत् ततोविसृज्यतंविप्रंस्वपेद्भूमौजि
तेंद्रियः ततःप्रातःसमुत्थायश्रुत्वाशौचंशुचिर्नरः कारयित्वारथंदिव्यंकिंकिणीजालमालिनं सर्वोपस्करसंयुक्तंरत्नैःसर्वै
गर्विभितं कांचनराजतंवाथहयसारथिसंयुतं ततोमध्यान्हसमयेकृतस्नानादिक्रोव्रती अतिर्यग्वीक्ष्यमाणस्तुपाखंडालाप
वर्जितः सौरसूक्तंजपेत्प्राज्ञआगच्छेतस्वमालयं निवृत्तनित्यकार्यस्तुकृत्वाब्राह्मणवाचनं वस्त्रमंडपिकामध्येस्थापयेन्तर





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धोत्तमं कुंकुमेनस्रग्गंधेनचर्चयित्वासमंततः मालाभिःपुष्पधूपैश्चसमंतात्परिवेष्टयेत् धूपेनागरुमिश्रेनधूपयित्वाततोपरि रथ
स्थंपूजयेद्भानुं सर्वसंपूर्णलक्षणं वित्तानुसारंहैमंचवित्तशाठ्यविवर्जितः शाठ्याद्व्रजतिवैकल्यंवैकल्याद्विफलंभवेत् ततोदेवं
समभ्यर्च्यसरथंसहसारथिं पुष्पैर्धूपैस्तथागंधैर्वस्त्रालंकारभूषणैः फलैर्नानाविधैर्भक्ष्यैर्नैवेद्यैर्घृतपाचितैः पूजये-
द्भास्करंभक्त्यामंत्रैरेभिस्त्रिभिःक्रमात् भानोदिवाकरादित्यमार्तंडजगतांपते अपांन्निधेजगद्रक्षभूतभावनभास्कर
प्रणतार्तिहराचिंत्यविश्वचिंतामणेविभो विष्णोहंसादिभूतेशआदिमध्यांतभास्कर भक्तिहीनंक्रियाहीनंमंत्रहीनं
जगत्पते प्रसादात्तवसंपूर्णमर्चनंयदिहास्तुमे एवंसंपूज्यदेवेशंप्रार्थयेत्स्वमनोगतं ददातिप्रार्थितंभानुर्भक्त्यासंतो
षितानरैः वित्तहीनोपिविधिनासर्वमेतत्प्रकल्पयेत् रथंससारथिंसाश्वंवर्णकैर्भिन्नलेखितं सौवर्णंचतथाभानुंय-
थाशक्त्याविनिर्मितं प्रागुक्तेनविधानेनपूजयित्वासविस्तरं जागरंकारयेद्रात्रौगीतवादित्रनिःस्वनैः प्रेक्षणीयैर्विचित्रै
श्चपुण्याख्यानकथादिभिः रथयात्रांप्रपश्येतभानोरायतनंश्रिया अनिमीलितनेत्रस्तुनयेत्तांरजनींबुधः प्रभातेविम
लेस्नात्वाकृतकृत्यस्ततोद्विजान् तर्पयेद्विविधैरन्नैर्दानैर्वासोविभूषणैः अश्वमेधेनतुल्यंतदिदंब्रह्मविदोविदुः अतोदे
यानिदानानियथाशक्त्याविचक्षणैः रथस्तुगुरवेदेयोयथोपस्करसंयुतः सरक्तवस्त्रयुगुलोरक्तधेनुसमन्वितः एवंचीर्णं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्रतोराजन्किंनाप्नोतिजगत्त्रये तस्मात्सर्वप्रयत्नेनकुरुत्वंरथसप्तमीं येनारोग्योभवेत्पुत्रस्त्वदीयोनृपसत्तम व्रतस्यास्यप्रभावेन
प्रसादाद्भास्करस्यच भविष्यतिमहातेजामहाबलपराक्रमः भोगान्सविपुलान्राजन्भुंक्तेराज्यमकंटकं दत्वासौरथसप्तम्यां
जायतेमानवोत्तमः लभतेपुत्रपौत्रांश्चसूर्यलोकंसपश्यति तत्रस्थित्वाकल्पमेकंचक्रवर्तीभविष्यति कृष्णउवाच इतिसर्वंस
माख्यायतपोयुक्तोद्विजोत्तमः यथामतंजगामासौनृपःसर्वंचकारह यथादिष्टंद्विजेंद्रेणतत्तत्सर्वंबभूवह एवंसचक्रवर्तित्वंप्राप्त
वान्नृपनंदनः श्रूयतेयस्तुमांधातापुराणेषुपरंतपः यइदंशृणुयाद्भक्त्याश्रावयेच्चयथाविधि तस्यैववपुष्यतेभानुर्यच्छत्यैवापिसंप
दः एवंविधंरथवररथवाजियुक्तंहैमंच हैमशतदीधितिनासमेतं दद्याच्चमाघसितसप्तमिवासरेयोसःसर्वचक्रगतिरेवमहींभुनक्ति
इतिरथसप्तमीकथासंपूर्णा अत्रैवअचलासप्तमीव्रतं युधिष्ठिरउवाच कथंस्त्रियःसुरूपास्युःसुभगाःसुप्रजास्तथा पुण्यस्यास
हतश्चात्रसर्वमेतत्फलंयतः अल्पायासेनसुमहद्येनपुण्यमवाप्यते कथयस्वप्रसादेनयेनश्रेयोभविष्यति श्रीकृष्णउ॰ श्रूयतांभार
तश्रेष्ठरहस्यंमुनिभाषितं यन्मयाकस्यचिन्नोक्तंअचलासप्तमीव्रतं वेश्याचेंदुमतीनामरूपौदार्यगुणान्विता आसीत्कुरुकुलश्रे
ष्ठसगरस्याविलासिनी सावसिष्ठाश्रमंपुण्यंजगामगजगामिनी वसिष्ठमृषिमासीनंप्रणम्यानतकंधरा कृतांजलिपुटोभूत्वाप्रा
हेदंजगतोहितं मयानदत्तंनहुतंनोपवासकृतव्रतं भक्त्यासंपूजितःशंभुःस्वामिन्शार्ङ्गधरोनच सांप्रतंतप्यमानायाव्रतंकिंचि





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दूदस्त्वमे येनदुःखात्तुपार्थोयाद्दुद्धारामिभवार्णवात् एतत्तस्याःसुबहुच्चश्रुत्वातिकरुणंवचः कारुण्यात्कथयामासवसिष्ठोमुनिपुं
गवः माघस्यसितसप्तम्यांसर्वकामफलप्रदं रूपसौभाग्यजननंस्नानंकुरुवरानने कृत्वाषष्ठ्यामेकभक्तंसप्तम्यांनिश्चलंजलं रा
त्र्यांतेचालयेथास्त्वंदत्त्वाशिरसिदीपकं माघस्यसितसप्तम्यामचलंचालितंत्वयत् जलामलानांसर्वेषांस्नानंप्रक्षालनंततः वसिष्ठवचनं
श्रुत्वातस्मिन्नहनिभारत चकारेंदुमतीस्नानंदानंसम्यग्यथाविधि स्नानस्यास्यप्रभावेनभुक्त्वाभोगान्यथेप्सितान् इंद्रलोकेप्स-
रोमध्येनायकत्वमवाप्सा अचलासप्तमीस्नानंकथितंतेविशांपते सर्वपापप्रशमनंसर्वसौभाग्यवर्द्धनं युधिष्ठिरउ० सप्तमी-
स्नानमाहात्म्यंश्रुतंनीरविशेषतः सांप्रतंश्रोतुमिच्छामिविधिमंत्रसमन्वितं श्रीकृष्णउवाच एकभक्तेनसंतिष्ठेत्षष्ठ्यांसंपू-
ज्यभास्करं सप्तम्यांतुप्रतीप्रातःसुगंभीरंजलाशयं सरित्सरस्तडागंवादेवखातमथापिवा स्त्रवावगाहंसत्वेष्टंदुष्टसत्वैरदूषितं व्या
लांबुपक्षिभिश्चैवजलगैर्मत्स्यकच्छपैः नकेनचाल्यतेयावत्तावत्स्नानंसमाचरेत् सौवर्णेराजतेपात्रेभक्त्याताम्रमयेथवा तैलस्य-
वर्तिर्दातव्यामहारजतरंजिता महारजतंकुसुंभं समाहितमनाभूत्वादत्त्वाशिरसिदीपकं भास्करंहृदयेध्यात्वाइमंमंत्रमुदीरयेत्
नमस्तेरुद्ररूपायरसानांपतयेनमः वरुणायनमस्तेस्तुहरिवासनमोस्तुते जलोपरिहरेद्दीपंस्नात्वासंतर्प्यदेवताः चंदनेनालिखे-
त्पद्ममष्टपत्रंसकर्णिकं मध्येशिवंसपत्नीकंप्रणवेनचसंयुतं शाक्रेदलेरविःपूज्योभानुश्चैवानलेतथा याम्येविवस्वान्नैर्ऋ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्येभास्करंपूजयेत्ततः पश्चिमेसवितापूज्यः पूज्योर्कश्चानिलेदले सौम्येसहस्रकिरणः शैवेसर्वात्मकोनृप पूज्याःप्रणवपूर्वास्तुन
मस्कारांतयोजिताः पुष्पैःस्रग्गंधधूपैश्चपृथक्त्वेनयुधिष्ठिर विसृज्यवस्त्रसंवीतंस्वस्थानंगम्यतामिति विसर्जितेसहस्रांशौ
समागम्यस्वमालयं ताम्रपात्रेथवाशक्त्यामृन्मयेवाथभक्तिमान् स्थापयेत्तिलपिष्टंच सघृतंसगुडंतथा कांचनंतालकं
कृत्वाअशक्तास्तिलपिष्टजं संस्थाप्यरक्तवस्त्रेणपुष्पैर्धूपैरथार्चयेत् ततस्तंचालयेद्विप्रैर्दद्यान्मंत्रेणतालकं आदित्यस्यप्र
सादेनप्रातःस्नानफलेनच दुष्टदौर्भाग्यदुःस्वप्नं मयादत्तंतुतालकं तालकंतालकपत्रं पूजयित्वोपदेष्टारंविप्रानन्यांश्चपूज
येत् ततोदिनंसमग्रंचसनरोध्यानतत्परः भास्करस्यकथाःशृण्वन्ननन्याश्चापिसंहिताः पाखंडादिभिरालापदर्शनस्पर्श-
नादिकं वर्जयेत्क्षपयेत्प्राज्ञस्ततोबंधुजनैःसह एतत्तेकथितंपार्थरूपसौभाग्यकारकं अचलासप्तमीस्नानंसर्वकामफल
प्रदं इतिपठतिसमग्रंयःशृणोतिप्रसंगात्कलिकलुषविनाशंसप्तमीस्नानमेतत् मतिमधिचजनानांयोददातिप्रयत्नात्सुरस
दनगतोसौसेव्यतेचाप्सरोभिः इतिअचलासप्तमीव्रतकथासमाप्ता अस्यामेवपुत्रसप्तमीव्रतं मदनरत्नेआदित्यपुराणे
आदित्यउवाच माघमासेतुशुक्लायांसप्तम्यांसमुपोषितः यःपूजयेत्तमांभक्त्यातस्याहंपुत्रतांव्रजेत् एवंचोभयसप्तम्यांमा
सिमासिस्मरोत्तम यस्तुमांपूजयेद्भक्त्यारुमेकमेकमादरात् रुमेकःसंवत्सरः प्रयच्छामिसुतंतस्यआत्मनोत्यंगसंभवं वित्तं



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यशस्तथापुत्रमारोग्यंपरमंसदा माघमासेतुयोविप्रः शुक्लपक्षेजितेंद्रियः पाखंडान्पतितानंत्यान्नजल्पेद्विजितेंद्रियः उपोष्य
विधिवत्षष्ठ्यांश्वेतमाल्यविलेपनैः पूजयित्वातुमांभक्त्यानिशिभूमौस्वपेद्बुधः प्रातरुत्थायसप्तम्यांकृत्वास्नानादिकाःक्रियाः पू
जयित्वातुमांब्रह्मन्वीरहोमंसमाचरेत् वीरहोमन्नामअग्निहोत्रहोमः प्रीणयित्वाहरिभक्त्याहविषापद्मलोचनं हरिःआदित्यः
दध्योदनेनपयसापायसेनद्विजांस्तथा तस्यैवकृष्णपक्षस्य षष्ठ्यांसम्यगुपोषितः तस्यैवेतिमाघमासस्य रक्तोत्पलैःस्रुगंधाद्यैर-
क्तपुष्पैश्चपूजयेत् एवंयःपूजयेद्भक्त्यानरोमांविधिवत्सदा उभयोरपिदेवेंद्रस्रुपुत्रंलभतेवरं इतिपुत्रसप्तमीव्रतंसंपूर्णं अथाष्टमी
व्रतानिलिख्यंते चैत्रशुक्लाष्टम्यांभवान्युत्पत्तिः तत्रयुग्मवाक्यात्पराग्राह्या अथभवानीयात्रोक्ताकाशीखंडे भवानीयस्तुपश्यं
तशुक्लाष्टम्यांमधौनरः नजातुशोकंलभतेसदानंदमयोभवेत् अशोककलिकाश्चाष्टौयेपिबंतिपुनर्वसौ चैत्रेमासिसिताष्टम्यां न-
तेशोकमवाप्नुयुः त्वामशोकहराभीष्टंमधुमाससमुद्भवं पिबामिशोकसंतप्तोमामशोकंसदाकुरु पुनर्वसुबुधोपेताचैत्रेमासि-
सिताष्टमी प्रातस्तुविधिवत्स्नात्वावाजपेयफलंलभेत् चैत्रेमासिचसंध्यायांप्रसुप्तेचजनार्दने बुधाष्टमीनकर्तव्याहंतिपुण्यंपुरा
कृतं नचबुधवारयुक्तायांशुक्लाष्टम्यांबुधाष्टमीव्रतं शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी पूर्वविद्धानकर्तव्याकर्तव्यापरसं
युता दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा मुहूर्तमात्रसत्वेपिपरा अथव्रतविधिः मासपक्षाद्युल्लिख्य ममइहजन्मनिजन्मांतरेचाबा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ल्याद्यारभ्य कर्मणामनसावाचाजानताजानतावापरस्ताद्यपद्धतिदोषपरिहारार्थं पुत्रपौत्रादिसकलमनोरथसिद्धिप्राप्त्यर्थं श्रीपरमेश्व
रप्रीत्यर्थंबुधाष्टमीव्रतमहंकरिष्ये बुधंषोडशोपचारैः कलशोपरिपूजयेत् चतुर्बाहुंग्रहपतिंकृष्णप्रसन्नमुखंबुधं ध्यायेहंशंखचक्रा
सिपाशहस्तमिलाप्रियं ध्यानं पीतमाल्यांबरधरकर्णिकारसमद्युते गृहाणपूजांभगवन्समागत्यग्रहेश्वर आवाहनं उद्बुध्य
ध्वमितिऋचंपठेत् मध्येबुधंआवा॰ अधिदेवतांविष्णुमिदंविष्णुरितिमंत्रेणप्रत्यधिदेवतांनारायणंसहस्रशीर्षेतिसूक्तेनावाह्य
इलापतेनमस्तेस्तुनिशेशप्रियसूनवे हेमसिंहासनंदेवगृहाणप्रीतयेमम आसनं शीतलोदकमानीतंकृपुष्पसरिदुद्भवं पाद्यंगृहा
णदेवेशममाद्यपरितुष्टये पाद्यंस॰ ताराकृतनमस्तेस्तुसततंभगवत्प्रिय गृहाणार्घ्यंग्रहपतेनानाफलसमन्वितं अर्घ्यंस॰ सुगंध
द्रव्यसंयुक्तैःकृष्णैः स्वादुसरिज्जलैः आचम्यतांनिशानाथनंदनप्रीतयेमम आचमनीयं पयोदधिघृतंचैवमधुशर्करसंयुतैः पं
चामृतैस्तथादेवस्नानंतत्स्वीकुरुप्रभो पंचामृतं वासितंगंधकर्पूरैर्निर्मलंजलमुत्तमं स्नानायतेमयाभक्त्यादीयतेव्रतसिद्धये अ
तोदेवादिकैः षड्भिःस्नापनीयस्त्वंबुधः पौरुषेणचसूक्तेनउद्बुध्यस्वेत्यृचैकया स्नानं पीतवस्त्रद्वयंदेवराजवंशकरप्रभो उर्वशीनाथ
जनकगृहाणप्रीतयेसदा वस्त्रं यज्ञोपवीतकंसूत्रंत्रिगुणंत्रिदशप्रिय ममपापविनाशार्थंगृहाणप्रीतयेबुध उपवीतं हरिचंदन-
कस्तूरीकर्पूरादिसमन्वितं गंधंभगवतेतुभ्यमिलानाथनमोस्तुते गंधंस॰ अक्षताश्च॰ अक्षतां॰ माल्यादी॰ पुष्पाणि॰ अथांगपू॰



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

बुधाय॰ पादौपू॰ सोमपुत्राय॰ जानुनीपू॰ तारकाय॰ कटीपू॰ राजपुत्राय॰ उदरंपू॰ इलाप्रियाय॰ हृदयंपू॰ कुमाराय॰ वक्षस्थलं-
पू॰ पुरूरवःपित्रेनमः बाहूपू॰ सोमकुलाय॰ स्कंधौपू॰ पीतवर्णाय॰ मुखंपू॰ ज्ञानाय॰ नेत्रेपू॰ बुधाय॰ मूर्धानंपू॰ सोमसूनवे॰
सर्वांगंपूज॰ वनस्पतिरसोद्भूपो॰ धूपं॰ आज्यंचेतिदीपं॰ नैवेद्यंगृह्य॰ नैवेद्यं॰ पूगीफलमितितांबूलं इदंफलमितिफलं हिरण्यग
र्भेतिदक्षिणांसम॰ नीराजनदीपं॰ उद्बुध्यध्वमितिपुष्पांजलिं उर्वश्याश्वपतिर्यस्तुयःपुरूरवसःपिता ग्रहमध्येस्वरूपोयोबुधोनः
संप्रसीदतु विशेषार्घ्यं यानिकानिचेतिप्रदक्षिणां नमस्कारं आवाहनंनजानामि॰ प्रार्थना संतुष्टोवायनादस्मादिलानाथोग्रहे
श्वरः सतांबूलाष्टलड्डुकंवायनंप्रतिगृह्यतां वायनं इतिपूजनं अथकथा श्रीकृष्णउवाच बुधाष्टमीव्रतंभूपवक्ष्यामि शृणु-
पांडव येनचीर्णेननरकंनरःपश्यतिनक्वचित् युधिष्ठिरउवाच बुधाष्टमीव्रतंकिंतत्कस्मात्पापात्प्रमुंचति तत्सर्वंवदनिश्चित्य-
ममदेवदयानिधे श्रीकृष्णउवाच पुराकृतयुगस्यादौइलोराजाबभूवह बहुभृत्यसुहृन्मित्रैर्मंत्रिभिःपरिवारितः जगामहिमव
त्पार्श्वेमहादेवेनशापितं योस्यांप्रविशतेभूमौसस्त्रीभवतिनिश्चितं सराजामृगयासक्तःप्रविष्टस्तदुमावनं एकाकीहयमारूढः
क्षणात्स्त्रीत्वंजगामह साबभ्रामवनेशून्येपीनोन्नतपयोधरा क्वाहंकस्यकुतःप्राप्ता नसाबुध्यतकिंचन तांददर्शबुधस्तन्वींरू-
पौदार्यगुणान्वितां अष्टम्यांबुधवारेचतस्यास्तुष्टोबुधग्रहः ददौगृहाश्रमंसम्यंमात्मीयंरूपतोषितः पुत्रमुत्पादयामासयोसौ-

ख्यातः पुरूरवाः चंद्रवंशकरोराजाआद्यःसर्वमहीभृतां ततःप्रभृतिपूज्येयंसाष्टमीबुधसंयुता सर्वपापप्रशमनीसर्वोपद्रवना
शिनी अथान्यदपिवक्ष्यामिधर्मराजकथानकं कृष्णउवाच आसीद्राजाविदेहायांनिमिर्नामसर्ववैरिभिः संग्रामेनिहतोराजा त-
स्यभार्यातिनिर्धना उर्मिलानामवभ्राममहीवालकसंयुता अवंतिनगरंप्राप्यब्राह्मणस्यनिकेतने चकारोदरपूर्त्यर्थंनित्यं कं
डनपेषणे ह्यल्पासासप्तगोधूमान्ददौबालकयोस्तदा कारुण्यात्पुत्रवात्सल्यात्क्षुधासंपीड्यमानयोः कालेनबहुनासाध्वीपं
चत्वमगमत्तदा पुत्रस्तस्याविदेहायांगत्वास्वपितुराश्रमे उपविष्टःसत्ययोगाद्बुभुजेगामनाकुलो अन्विष्यधर्मराजेनसाक
न्यानिमिवंशजा श्यामलानामचार्वंगीसर्वलक्षणसंयुता गांधर्वेणोपयित्वानीतास्वनगरंप्रति तामुवाचवरारोहांधर्मराजः
स्वकांप्रियां वहस्वसर्वव्यापारंश्यामलेत्वंगृहेमम कुरुष्वसर्वभृत्यानांदानशिक्षांयथोचितां किंत्वेतेप्रवराःसप्तकीलके
रितिर्यंत्रिताः कदाचिदपिनोद्घाट्यास्त्वयावैदेहिनंदिनी एवमस्त्वितिवैप्रोक्तानिजकर्मचकारह ततोभुक्त्वाबुधस्याग्रेबांधवैःप्री-
तिपूर्वकं तावदेवाहिभोक्तव्यंयावत्सा कथ्यतेकथा कदाचिद्दुःखाकुलीभूत्वाधर्मराजविदेहजा उद्घाटयित्वाप्रवरंददर्शजननींस्वकां
पच्यमानांचरुदतीं भीषणैर्यमकिंकरैः लीलयाक्षिप्यतेबध्वा तप्ततैलेषुसापुनः तथैवतलकोबध्वापीडितासामनस्विनी
द्वितीयेनरकेतद्वत्तांददर्शस्वमातरं यंत्रेनिष्पीड्यमानासाशिलायांलोष्ठकेनच तृतीयेप्रवरेतद्वत्तामेवचददर्शसा करिभिःपी



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

उह्यमानासाघंटायुक्तैश्चकल्पितैः श्वभिश्चतुर्थेप्रवरेभीषणैर्दारुणाननैः अभक्ष्यभक्षणाद्यैश्चक्रंदतींतांपुनःपुनः पंचमेप्रवरे
भूमौकंठेपादेनताडितां संदंशैर्घनपातैश्चछिद्यमानांसहस्रशः षष्ठेतामिक्षुयंत्रस्थांमस्तकेमुद्गराहतां संपीड्यमानासनिशंसं
भृशंदारुखंडवत् सप्तमेप्रवरेचैवकृमिरूपैःसुदारुणैः दृष्ट्वातथागतांतांतुमातरंदुःखकर्षितां श्यामलाम्लानवदनाकिंचिन्नोवा
चभामिनी किमर्थंम्लानवदनातिष्ठसित्वमनिंदिते कारणंतन्ममेब्रूहिकिंचिन्नोद्घाटितास्त्वया एतेप्रवरकाःसप्तनिषिद्धायेपुराम
या इत्युक्त्वाश्यामलाप्राहभर्तारंविनयान्विता किंतुपापंकृतंराजन्ममसमात्रासुदारुणं येनेत्थंविविधैर्घोरैर्बाध्यतेबहुशस्त्वया इ
त्युक्तःप्रियवयाप्राहतांयमःप्रहसन्निव तवमात्रासुतस्नेहाद्गोधूमावेष्टिताःकिल किंनजानासितन्वंग्नियेनपृच्छसिमामिह ब्राह्मं
प्रणयाद्भुक्तंदहत्यासप्तसंकुलं तद्वत्कृमिरूपेणक्लिश्यत्यासप्तमंकुलं गोधूमास्तइमेभूत्वाकृमिरूपाःसुदारुणाः येपुराब्राह्मण
गृहेहृतास्तेत्वत्कृतेतया जानाम्येतदहंसर्वंयत्तेमात्राकृतंपुरा श्यामलोवाच तथापित्वांसमासाद्यदेवंजामातरंविभुं मुच्यतेतेन
पापेनयथात्वमधुनाकुरु तच्छ्रुत्वाचिंतयाविष्टश्चिरंध्यात्वाजगादतां धर्मराजःसुखासीनःप्रियांप्राणहरेश्वरीं इतस्त्वंसप्तमेतीते
जन्मनिब्राह्मणीशुभा आसीत्तस्मिन्सदासंगात्सखीनांपर्युपोषिता बुधाष्टमीतुसंपूर्णायथोक्तफलदायिनी तस्याःपुण्यंददस्व
त्वंयदिसत्यंममाग्रतः तेनमुच्येतनरकान्तेमातापापसंघकृत् तच्छ्रुत्वात्वरितंस्नात्वाददौपुण्यंत्रिवत्सकं स्वमात्रेश्यामलातुष्टाते

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नमोक्षंअगाभसा उर्मिलारूपसंपन्ना दिव्यदेहावरांशुका विमानवरमारूढा दिव्यमाल्यांबरावृता भर्त्तुःसमीपेस्वर्गस्थादृश्यतेद्या
पिसाजनैः बुधस्यपार्श्वेनभसिनिमिराजसमीपगा विस्फुरंतीमहाराजबुधाष्टम्याःप्रभावतः युधिष्ठिरउवाच यद्येवंप्रवराकृ
ष्णातिथिर्वैतुबुधाष्टमी तस्याएवविधिंब्रूहियदितुष्टोसिमाधव श्रीकृष्णउवा० शृणुपांडवयत्नेनबुधाष्टम्याविधिंशुभं यदाय
दासिताष्टम्यांबुधवारोभवेद्यदि तदातदाहिसाग्रात्याएकभक्ताशनैर्नृभिः स्नात्वानद्यांतुपूर्वाह्णेगृहीत्वाकरकंनवं जलपूर्णलिसद्व
लैःकृत्वानर्घ्यैःसमन्वितं पूजयेच्चगृहंनीत्वाबुधमेकंक्रमेणतु एकमाषस्कवर्णेनतदर्धार्धेनवापुनः कारयेद्बुधरूपंतुस्वशक्त्यावा
प्रयत्नतः अंगुष्ठमात्रंपुरुषंचतुर्बाहुंसकलक्षणं पद्ममध्येव्रणांकुंभंपूजयेत्सिततंडुलैः हेमपात्रेचसंस्थाप्यपीतवस्त्रयुगेनच वस्त्रे
परिस्थितंदेवंपीतवस्त्राक्षतादिभिः पंचामृतेनसंस्नाप्यतत्तन्मंत्रैःक्रमेणतु नैवेद्यंगुग्गुलंधूपंदशांगेनसुगंधितं पायसैर्घृतपूपैश्च
मोदकाशोकवर्तिकैः फलैश्चविविधैश्चैवशर्कराभिर्गुडैःशुभैः ततःपुष्पाक्षतैःपीतैर्वक्ष्यमाणैश्चनामभिः नमोबुधाययादौ
तुसोमपुत्रायजाह्नुनी तारकायकर्त्रीन्वैवराजपुत्रायचोदरं इलाप्रियायहृदयंकुमारायेतिवक्षसि बाहूपुरूरवःपित्रेअंसौसौ
मस्कृतायच मुखंतुपीतवर्णायज्ञानायचस्तनद्वयं मूर्धानंतुबुधायेतिएषुस्थानेषुपूजयेत् सौवर्णराजतंताम्रंपात्रमादायशोभनं
गंधपुष्पाक्षतैःपीतैर्गुडमिश्रांबुपूरितैः जानुभ्यामवनिंगत्वातेनचार्घ्यंनिवेदयेत् उर्वश्याम्वशरीरोयस्तुयःपुरूरवसःपिता योग्र



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हाणामधिपतिर्बुधोनः संप्रसीदतु वरांश्चविष्णुनादत्तान्सकल्लानः प्रसीदतु मंत्रेणानेनदत्वार्घ्यंजस्त्वामंत्रमिमंबुधः प्रथमेमोद
कान्दद्याद्द्वितीयेफेणिकास्तथा तृतीयेघृतपूर्णंचचतुर्थेवटकांस्तथा पंचमेमंडकान्दद्यात्षष्ठेसोहालिकास्तथा अशोकवर्तिकाश्चैवस
समेमासिकारयेत् अष्टमेशर्करामिश्रैःखांडवैश्चयुधिष्ठिर विप्रायवायनंदद्याद्व्रतीभोजनमाचरेत् एवंक्रमेणकर्तव्यंबुधाष्टम्यांयु
धिष्ठिर बांधवैःसहमित्रैश्चभोक्तव्यंप्रीतिपूर्वकं सौम्यमाख्यानकंशृण्वन्नरकेभ्योविमुच्यते सौमात्मजात्मकमशेषसुखप्रदंतंयः
पूजयेत्सकलनीरयुतंचकुंभं पक्वान्नपात्रसहितंसहिरण्यवस्त्रंपश्यत्यसौयमपुरीनकदाचिदेव युधिष्ठिरउवाच उद्यापनविधिंब्रूः
हिकृपयाभक्तवत्सल कस्मिन्कालेचकिंद्रव्यंकथंसफलभाग्भवेत् श्रीकृष्णउवाच आदौमध्येतथाचांतेकुर्यादुद्यापनक्रियां स
म्यांभयतोभूत्वाकुर्याद्दंतप्रधावनं आचम्यकुर्यात्संकल्पंदशविप्रान्निमंत्रयेत् अष्टम्यांप्रातरुत्थायशुचिर्भूत्वाव्रतीततः गंगा
द्यादिमहातीर्थेस्नात्वानित्यकृतक्रियः गृहमध्येशुचौदेशेरंगवल्याविराजिते पुण्याहवाचनंकृत्वाकुर्याद्दीक्षाविधानकं प्राणानाय
म्यविधिवत्कृत्वासंकल्पनादिकं तिथ्याद्युल्लेखनान्तेव्रतनामप्रकीर्तयेत् मयाकृतंबुधाष्टम्याव्रतंसांगफलाप्तयेउद्यापनंकरिष्येह
मित्यक्षतकुशोदकं कृत्वाचार्यादिवरणंकुर्याद्वस्त्रादिभिःफलैः ब्राह्मणंवृणुयात्तत्रवस्त्रतांबूलभूषणैः ततःपूजादिकंकुर्याद्ग्रह
यज्ञपुरःसरं ततस्त्वष्टदलंकुर्यान्मध्येकर्णिकयासह पंचवर्णैःसमापूर्यसकेसरदलानिच कर्णिकायांन्यसेद्धान्यंपंचप्रस्थप्रमा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

णतः दलेषुचदलाग्रेषुयथाशक्त्याविनिक्षिपेत् तन्नैवंस्थापयेत्कुंभान्मध्येपूर्वादिदिक्षुच गंगाजलेनसंपूर्यवस्त्रादिभिरलंकृता
न् पंचत्वक्पल्लवोपेतान्नवकुंभान्यथाविधि तदुत्तरेग्रहान्सर्वान्मंडलेस्थापयेत्ततः तत्पूर्वंस्थापयेत्कुंभंवारुणंचविशेषतः व
स्त्रत्वक्पल्लवयुतैः पंचरत्नैःसकांचनैः तत्तन्मंत्रैःप्रतिष्ठाप्य पूजयेच्चयथाविधि सप्तजन्मार्जितंचौर्यपातकादिचयत्कृतं तद्दोषपरि
हारायबुधाष्टमीव्रतंकृतं तस्यसांगफलप्राप्त्यैपूजांहोमंकरोम्यहं बुधप्रीत्यैचतत्सर्वमितिसंकल्प्यपूजयेत् कर्षमात्रेणारा
जेंद्रतदर्धार्धेनवापुनः बुधस्यप्रतिमांकुर्यात्स्वर्णेनविचक्षणैः कर्णिकायांमध्यकुंभेताम्रपात्रेबुधन्यसेत् पंचामृतेनस्नपनंव-
स्त्रयुग्मेनवेष्टयेत् आत्रेयंपीतवस्त्रंचपीतपुष्पाक्षतादिभिः उपचारैःषोडशभिःपुरुषसूक्तविधानतः तद्दक्षिणेबिम्बमिदंविष्णु
रित्यधिदैवतं सहस्रशीर्षापुरुषवामेप्रत्यधिदैवतं दलेषुविन्यसेद्देवांप्रागारभ्यप्रदक्षिणं रविचंद्रकुजगु रुशुक्रार्किराहुकेतुको
अनंतंवामनंविष्णुंशौरिंसत्यंजनार्दनं हंसंनारायणंचाष्टौदलाग्रेषुचपूजयेत् धूपैर्दीपैश्चनैवेद्यैः फलैश्चविविधैर्यजेत् बहिरिं
द्रादयःपूज्यादशदिक्पालकास्तथा यमंचचित्रगुप्तंच श्यामलांदक्षिणेन्यसेत् कुंभेषुवंशपात्रेषुअष्टावष्टौचलड्डुकान् यज्ञोपवीतान्
कलशान्दक्षिणासहितान्यजेत् पूजयित्वाततोहोमंशारवोक्तविधिनासुधीः मंडलात्पश्चिमेभागेस्थंडिलंचतुरस्रकं कृत्वातुलेख
नादीनिकृत्वाग्निंस्थापयेत्सुधीः इध्मदर्भैःपरिस्तीर्यपात्रासादनमाचरेत् पूर्णपात्रविधानांतेब्रह्मासनमतःपरं इध्माधानमुखप्रांते



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रधानाहुतिहावनं अपामार्गसमिद्भिश्च यवव्रीहितिलैर्घृतैः गोधूमैश्च सितैर्होमं पृथक्पृथगितं द्वितः उद्बुध्यस्वेति मंत्रेण होमम-
ष्टोत्तरं शतं विष्णुमंत्रेण जुहुयात्तथा नारायणं हुनेत् अधिमत्यधिदेवौ च मंत्राभ्यां जुहुयात्तथा ग्रहादिभ्यश्च जुहुयात् प्रायश्चि
त्तादिकं तथा पूर्णाहुतिं च जुहुयात्कुर्याद्ब्रह्मविसर्जनं पूर्णपात्रोद्वासनं च बलिदानमतः परं वन्ह्यादिपूजनं कृत्वा देवतोद्वासनं ततः
अभिषिच्याथ तिलकं रक्षाबंधनमेव च आचार्यं च सपत्नीकं पूजयित्वा यथाविधि प्रतिमावस्त्रकलशान्गोदानं दक्षिणां तथा दत्वा
ब्रह्मादिविप्रेभ्यः कलशांश्च सदक्षिणान् ब्राह्मणान्भोजयेत्पश्चादाशिषो वाचयेत्तथा इति श्रीभविष्योत्तरपु० बुधाष्टमी
व्रतोद्यापनं संपूर्णं अथ शुक्लादिश्रावणकृष्णाष्टम्यां दशाफलव्रतं सा निशीथव्यापिनी ग्राह्या तत्र पूजाविधिः त
मद्भुतं बालकमंबुजेक्षणं चतुर्भुजं शंखगदायुदायुधं श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीतांबरं सांद्रपयोदसौभगं
महार्हवैडूर्यकिरीटकुंडलत्विषापरिष्वक्तसहस्रकुंतल उद्दामकांच्यंगदकंकणादिभिर्विराजमानं वसुदेवनंदनं कृष्णाय नमः
ध्यानं० वासुदेवाय० आवाह० शेषशायिने० आसनं० तीर्थपादाय० पाद्यं० गंगाजनकाय० अर्घ्यं० यमुनावेगसंहारि
णे नमः आचमनी० नित्यमुक्ताय० पंचामृतस्नानं० श्रीगोपालाय० स्नानं० पीतवाससेन० वस्त्रं० यज्ञप्रियाय० यज्ञोपवी
तं० सर्वेश्वराय० चंदनं० अधोक्षजाय० अक्षतान्० कमलाप्रियाय० पुष्पाणि० तुलसीप० नामपूजा कृष्णाय० विष्णवेन०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हरयेन॰ शेषशायिने॰ गोविंदाय॰ गरुडध्वजाय॰ दामोदराय॰ हृषीकेशाय॰ पद्मनाभाय॰ उपेंद्राय॰ १० अथदोरकबंधनं सं
सारार्णवमग्नानांनराणांपापकर्मणां इहमोक्षफलावाप्तिंकुरुष्वपुरुषोत्तम इतिदोरकबंधनं पारिजातापहाराय॰ धूपं॰
ज्ञानप्रदीपाय॰ दीपं॰ चक्रिणेनमः नैवेद्यं॰ अघनाशिनेन॰ तांबूलं॰ सर्वव्यापिने॰ दक्षिणां॰ पद्मनाभाय॰ नीराजनं॰ अनं
ताय॰ पुष्पांजलिं॰ देवदेवनमस्तेस्तुभक्तप्रियदयानिधे गृहाणार्घ्यंमयादत्तंदेवक्यासहितप्रभो विशेषार्घ्यं॰ त्रिलोकनाथोदे
वेशः सर्वभूतदयानिधिः दानेनानेनस्फप्रीतोभवत्विहसदामम वायनमंत्रः श्रीकृष्णःप्रतिगृण्हातिश्रीकृष्णोवैददातिच
श्रीकृष्णस्तारकोभाभ्यांश्रीकृष्णायनमोनमः इतिवायनं यस्यस्मृत्येतिप्रार्थना अथकथा सूतउवाच शृणुध्वमृषयःसर्वे
नैमिषारण्यवासिनः पुराचद्वापरस्यांतेकृष्णदेवेनभाषितं तद्व्रतंचप्रवक्ष्यामिसांगोपांगंमुनीश्वराः पुरावैद्वापरस्यांतेपांडवाः
कौरवास्तथा द्यूतंप्रचक्रिरेसर्वेधनमानेनमोहिताः निर्जिताःपांडवादुःखाद्वनंप्रापुर्मुनीश्वराः कुंतीविदुरगेहेतुसंस्थितावमहाय
शा तच्छ्रुत्वाकृष्णदेवोपिकृपयापरयायुतः आययौगरुडारूढोविदुरस्यगृहंप्रति तदापश्यन्महाबाहुकुंतीपरमहर्षिता विदु
रेणार्चितः कृष्णःकुंतीचैवाहभक्तितः नमामित्वामहंकुंतीसंश्रुतंचविडंबनं त्वत्पुत्रास्तुमहादुःखात्प्रापयुर्गहनंवनं तवापिस्फ
महद्दुःखंसर्वदातन्ममाप्रियं कुंत्युवाच हृषीकेशमहाबाहोमहद्दुःखेनकर्षिता कृपयापरयादेवरक्षितावयमीदृशाः ममचैव



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

महद्दुःखत्वंजानासिचवैप्रभो मत्पुत्रास्तुमहादुःखात्प्रविष्टागहनंवनं कृपयाविदुरोमह्यंकौरव्यःप्रस्थसंमितं ददातिप्रीतिदः

कृष्णजीवनायमहामतिः गृहस्यपश्चिमेभागेवसामिचजनार्दन दर्शिताकौरवाणांहिसर्वेषांकुमतिस्तथा इतितस्यावचःश्रु-

त्वाकृष्णःपरमधर्मवित् आहचैनांवासुदेवोभक्तप्रियतमस्त[illegible] व्रतंतेकथयिष्यामियेनदुःखात्प्रमुच्यते पुत्रपौत्रैःपरिवृता

स्वराज्यंप्राप्स्यसेचिरात् दशफलमितिख्यातंतद्व्रतंकुरुसुव्रते कुंत्युवाच कस्मिन्कालेतुकर्तव्यंतद्व्रतंकेशवप्रभो वद

मांप्रतिइत्युक्तोजगाद्यादवेश्वरः श्रावणस्यासितेपक्षेअष्टम्यांचनिशीथके देवक्यांवासुदेवश्चप्रादुर्भूतोनसंशयः त-

स्याग्रेदशगुणितंसूत्रंस्थाप्यप्रपूजयेत् हस्तेबध्वातुतत्सूत्रंदशाहंव्रतमाचरेत् संसारार्णवमग्नानांनराणांपापकर्मिणां

इहामुत्रफलावाप्तिंकुरुष्वपुरुषोत्तम अनेनदोरकंबध्वादशवर्षंव्रतंचरेत् देवस्यपुरतोनित्यंदशपद्मानिकारयेत् ततश्चप्र-

शृणुयात्पुण्यांकथामेतांशुभावहां तुलस्याःकृष्णवर्णायादलैर्दशभिरर्चयेत् कृष्णंविष्णुंहृषीकेशंगोविंदंगरुडध्वजं दामो

दरंहृषीकेशंपद्मनाभंहरिंप्रभुं एतैश्चनामभिर्नित्यंकृष्णदेवंसमर्चयेत् नमस्कारंततःकुर्यात्प्रदक्षिणसमन्वितं एवंद-

शदिनंकुर्यात्व्रतानामुत्तमव्रतं आदौमध्येतथाचांतेहोमंकुर्याद्विधानतः कृष्णमंत्रेणजुहुयाच्चरुणाष्टोत्तरंशतं ततोहोमां

तेविधिवदाचार्यंपूजयेत्सुधीः सौवर्णेताम्रपात्रेवामृन्मयेवेणुपात्रके सौवर्णंतुलसीपत्रंकारयित्वासुलक्षणं प्रतिमांचतथासु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तामर्चयित्वा विधानतः     निधायप्रतिमांतत्रआचार्यायनिवेदयेत् दातव्यागौःसवत्साचवस्त्रालंकारभूषिता दशहोमेतुकृष्णा
यपूरिकादशचार्पयेत् दापयेत्तुब्राह्मणायस्वयंभुक्त्वातथैवच उपायनंचगृण्हीष्वसर्वोपस्करसंयुतं संसारार्णवमग्नानां पाहि
त्वंदेवकीसुत एवंचोपायनंदत्वानमस्कृत्वाक्षमापयेत् दक्षिणाभिर्युतंदेविकर्तव्यंकृष्णासन्निधौ व्रतांतेदशविप्रेभ्यःप्रत्येकंद
शपूरिकाः एवंदशसुवर्षेषुव्रतंकुर्यादतंद्रितः एवंव्रतंत्वयादेविकर्तव्यंकृष्णसन्निधौ एवमुक्त्वातुकृष्णेनकुंतीश्रुत्वामुदान्वि
ता उवाचकृष्णदेवंसाममविंत्तंनविद्यते प्रत्युवाचहृषीकेशस्तवविंत्तंभविष्यति एवमुक्त्वाययौकृष्णःकर्णंद्रष्टुंसुखान्वितः
कर्णोपिचमहात्मानंकृष्णंदृष्ट्वाप्रहर्षितः सिंहासनंददौतस्मैपाद्यमर्घ्यंतथैवच कर्णोप्युवाचदेवेशंकिमर्थंत्तवचागमः इत्यु
क्तःकृष्णदेवोथतवमातातिदुःखिता कर्णउवाच भूरिभक्त्यातथाकृष्णमातरंप्रणमाम्यहं कथंवादुःखितामाताप्रमुच्यतेतव
दस्वमे श्रीकृष्णउवाच सुवर्णपात्रेसंपूर्यपायसंक्षीरसंयुतं सहस्त्रशतनिष्कंतुदातव्यंवायुहस्तके तवमातातथाप्री
ताभविष्यतिनसंशयः एवमुक्त्वातथाकृष्णोद्वारकामाजगामह कृष्णवाक्यंततःश्रुत्वा कर्णश्चक्रेमहायशाः पंचभ
क्ष्यसमायुक्तंपात्रंस्वर्णेनपूरितं शतनिष्कसमायुक्तंवायुहस्तेप्रदायसः प्रहसंतीतथाकुंतीपात्रंदृष्ट्वाथहर्षिता देवस्य
सन्निधौकुंतीव्रतंचक्रेथभक्तितः कृष्णेनकारितंसर्वंममभाग्यायवैध्रुवं कृष्णपूजांततःकृत्वाकथांश्रुत्वाथभक्तितः उपाय



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धूपं॰ आज्यंच्चेतिदीपं॰ गोधूमपिष्टशाल्यादितंडुलानांचकारयेत्त कृत्वाप्रसृतिमात्रास्तुपूरिकाघृतपाचिता: शाल्योदनंसूपयुक्तंद
धिदुग्धंघृतंतथा नानाव्यंजनसंयुक्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यं॰ उत्तरापो॰ करोद्वर्तनं॰ फलं॰ तांबूलं॰ हिरण्यगर्भेतिदक्षिणां॰
नीराजनं॰ प्रदक्षिणां॰ नमस्कार: शार्ङ्गबाणाब्जखड्गारिप्रासतोमरमुद्गरै: अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं पुष्पांजलि:
त्वंलक्ष्मीत्वंमहादेवीत्वंज्येष्ठेसर्वदामरै: पूजितासिमयादेविवरदाभवमेसदा इतिप्रार्थना पूजाविधि: अथकथा युधिष्ठिरउ॰
मृतवंध्यातुयानारीकाकवंध्यातथापरा गर्भस्रावीतृतीयाचनानादोषैस्तुदूषिता निर्धनाश्चनरायेवैदारिद्र्येणहताश्चये कर्मणाके-
नमुच्यंतेतन्मेब्रूहिजनार्दन श्रीकृष्णउ॰ मासिभाद्रपदेशुक्लेपक्षेज्येष्ठायदाभवेत् रात्रौजागरणंकुर्याद्गीतवादित्रनिःस्वनै: एवं
विधिविधानज्ञोएभिर्मंत्रैश्चपूजयेत् एह्येहित्वंमहाभागेसुरासुरनमस्कृते ज्येष्ठासिसर्वदेवानांमत्समीपंगताभव श्वेतसिं
हासनस्थात्वंश्वेतवस्त्रैरलंकृता वरदंपुस्तकंपात्रपाशहस्तेनमोनम: ज्येष्ठेश्रेष्ठेतपोनिष्ठेधर्मिष्ठेसत्यवादिनी समुद्रमथनोत्पन्ने
ज्येष्ठायैतेनमोनम: शार्ङ्गबाणाब्जखड्गारिप्रासतोमरमुद्गरै: अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं त्वंलक्ष्मीत्वमुमादेवित्वं
ज्येष्ठेसर्वदामरै: पूजितासिमयादेविवरदाभवमेसदा प्रार्थना पुत्रदारविवृद्ध्यर्थंलक्ष्म्याश्चैवविवृद्धये अलक्ष्म्याश्चविनाशा
यसर्वकालंद्विजोत्तम गुरुंसंपूजयेद्भक्त्यावस्त्रैराभरणादिभि: ततोद्वादशवर्षाणिपूजनीयाप्रयत्नत: यावज्जन्म॰ थापूर्वविधि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नानेनमानवैः ददातिवित्तंपुत्रांश्चअर्चनीयासदास्त्रिया अनेनविधिनाप्रोक्तांयोहिपूजयतेनरः ज्येष्ठांतुपूजयेन्नारीतस्याल-
क्ष्मीविवर्धते वंध्यातुलभतेपुत्रान्दुर्भगासुभगाभवेत् एवंविधिविधानेनज्येष्ठादेवींसमर्चयेत् विघ्नास्तस्यप्रणश्यंतियथाप्सु
लवणंतथा तथाग्राह्यंकुरुश्रेष्ठज्येष्ठायाःशोभनव्रतं नीराजनेकृतेचैवदीपोग्राह्यःसुभक्तितः नैवेद्यसहितंप्राश्यव्रतीत्वग्रेयुधि
ष्ठिर गुरुहस्तात्सदाग्राह्योदीपःप्रज्वलितोमहान् व्रतस्थोभक्तियुक्ताश्चशुचिःप्रयतमानसः अनेनविधिनाचैवव्रतंकार्यंयु
धिष्ठिर ज्येष्ठानामपरंदेवीभुक्तिमुक्तिप्रदायिनी यस्तुपूजयतेराजन्तस्मैसर्वंप्रयच्छति कृष्णउवाच मासिभाद्रपदे
शुक्लेपक्षेज्येष्ठर्क्षसंयुते तस्मिन्दिनेव्रतीकुर्याज्ज्येष्ठायाःपरिपूजनं तत्राष्टम्यांयदावारोभानोर्ज्येष्ठर्क्षमेवच प्रतिवर्षे
व्रतंयच्चविहितंकेवलेशुभे प्रातःस्नानंनरःकुर्यात्तस्यादेव्यादिनेशुभे भक्तियुक्तःशुचिःकुर्याज्ज्येष्ठादेव्यास्तुपूजनं
जलाशयात्तुपूर्वेद्युरानयेत्पंचशर्कराः देवीरूपंचतत्रैवकृत्वावास्थापयेत्ततः गोमयेनोपलिप्तेचहेमींवाकारयेद्बुधः स्थाप-
पयेद्राजतींताम्रींलेख्यांवापटकुड्ययोः आवाहयेत्ततोदेवीमथवापुस्तकेपिवा त्रिलोचनांशुक्लदंतींबिभ्रतींराजतींतनूं
विरक्तांरक्तनयनांज्येष्ठांध्यायामिसुंदरीं इतिमंत्रेणतांदेवीमावाह्यसुकृतीव्रती स्नानंदद्यात्तथायच्चपादयोरुभयोर्द्विज श्री
खंडकर्पूरसंयुतंदद्यादर्घ्यंचभक्तितः पंचामृतंतथास्नानंनिर्जलेनजलेनच वस्त्रंगंधंतथापुष्पंधूपदीपादिकंचयत् पूजयित्वाचसौ



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भाग्येर्द्रव्यैर्नानाविधैः शुभैः गोधूमशालितंदुलैर्नानाद्रव्यैश्च निर्मितं कृत्वा प्रसृतमात्रास्तु पूरिका घृतपाचिताः भक्त्या मया

सुरेशानी यदन्नं दीयते तव तद्गृहाण महादेवि ज्येष्ठे श्रेष्ठे नमोस्तु ते निवेदनीयं यत्किंचिद्द्याद्द्रव्यैः प्रयत्नतः ततस्तु तां महादेवीं

सर्वकामफलप्रदां ज्येष्ठायै तेन मस्तुभ्यं श्रेष्ठायै तेन मो नमः ज्येष्ठे श्रेष्ठे तपोनिष्ठे धर्मिष्ठे सत्यवादिनि ततः क्षमाप्य तां देवीं स्तुवी

त स्तवनोत्तमैः ब्राह्मणान् भोजयेत्पश्चात्सुवासिन्यस्तथा बहु दास्यो दासाश्च संभोज्या दीनांध कृपणास्तथा देवीं विप्रमनुज्ञा

प्य स्वयं भुंजीत वाग्यतः भक्षयित्वा तथाचम्य देवीं नत्वा पुनः पुनः शयीत ब्रह्मचर्येण कुर्यात्प्रातर्विसर्जनं एवमेव प्रकुर्याद्देव्र

तं तु परिवत्सरं ज्येष्ठाविसर्जनां ते तु शर्करां वारि निक्षिपेत् दध्योदनं तया साकं देयस्वस्य शुभाप्तये ज्येष्ठे देवि नमस्तुभ्यमल-

क्ष्मीनाशहेतवे पुनरेही वत्सरांते मम गेहे शुभप्रदे एवं संप्रार्थ्य तां देवीं गीतवाद्यपुरःसरैः अपूपवटकान्दद्याद्ब्राह्मणेभ्यो

ततो द्विज कुर्याद्देव प्रयत्नेन सायं वाथ विसर्जयेत् विद्यार्थी प्राप्नुयाद्विद्यां स्त्रीकामः स्त्रियमेव च लक्ष्मीवान्जायते मर्त्यः-

स्त्री तु मोदेत भर्तरि विनायकेन सहितां देव्याः कुर्याद्विसर्जनं सौवर्णीं राजतीं ताम्रीं मृन्मयीं वापि शक्तितः स्वं तं स्वयं च कृतवा

नृसिंहं चाप्यकृतार्हणः देव्या महत्वं कथितं तव देवविधिश्च मंत्रार्चनसंयुतस्तथा मंत्रोपि साायुज्यकरो व्रतस्य तथा मया ते क

थितं सदेव अथोद्यापनं यस्याः सिंहो रथे युक्तो व्याघ्राश्चापि महाबलः ज्येष्ठामहमिमां देवीं प्रपद्ये शरणं शुभां ताम

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ग्निवर्णांतपसाज्वलंतीमित्यावाह्य आपोहिष्ठेतितिसृभिः हिरण्यवर्णेतितिसृभिः अभिषिंचेत् कृत्वाचाष्टदलंपद्मंस्थापयेत्त
त्रसव्रती नाममंत्रेणकुर्वीतपाद्यमर्घ्यमथासनं स्नानमाचमनंचैवमधुपर्कश्चकंचुकी वस्त्रगंधाक्षताःपुष्पधूपदीपौप्रयत्नतः
नैवेद्याचमनीयंचकरोद्वर्तनकंशुभं तांबूलदक्षिणादानंततोनीराजयेच्छुभां स्थापितेग्नौततःपश्चाद्धोममष्टोत्तरंशतं द्रव्यै
दधिमधुक्षीरघृतैःकुर्यात्प्रयत्नतः तर्पणंचततःकुर्यादेभिर्मंत्रैर्विचक्षणः ज्येष्ठायै॰ श्रेष्ठायै॰ सत्यायै॰ कलिनाशिन्यै॰ विद्या-
यै॰ वैनायक्यै॰ तपोनिष्ठायै॰ श्रियै॰ कृष्णायै॰ ब्रह्मिष्ठायै॰ विसृज्यचततोदेवींब्राह्मणायनिवेदयेत् व्रतांतेप्रतिमांदद्यात्सौवर्णी
पलसंमितां कृष्णावस्त्रेणसंयुक्तामाचार्यायनिवेदयेत् वस्त्राभरणमाल्यादिलेपनैःपूजयेद्द्विजं प्रणिपत्यततःपश्चात्तस्मैसर्वं
निवेदयेत् अनेनविधिनायस्तुब्राह्मणानांचतुष्टये ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीतवाग्यतः ब्राह्मणांश्चततोनत्वायाचयेत्स
र्वमंगलं एवंसुवासिनीभोज्यापूज्याःसर्वसमृद्धये एवंकृतेव्रतेसम्यक्सर्वशांतिःप्रजायते धनधान्यसमृद्धिश्चआरोग्यंभवति
ध्रुवं इतिश्रीभविष्योत्तरपुराणेज्येष्ठादेवीव्रतोद्यापनंसंपूर्णं तत्रैवभाद्रशुक्लाष्टम्यांदूर्वाष्टमीव्रतं सापूर्वाग्राह्या श्रावणी
दुर्गनवमीदूर्वाष्टमिहुताशनी पूर्वविद्धातुकर्तव्याशिवरात्रिर्बलेर्दिनं इतिवृद्धयमवचनात् शुक्लाष्टमीतिथिर्यातुनोत्तरासावि
धीयते इतिहेमाद्रिः मुहूर्तेरोहिणीष्टम्यांपूर्वावायदिवापरा दूर्वाष्टमीतुसाकार्याज्येष्ठामूलंचवर्जयेत् इतिउक्तंतत्पूर्वत्रज्येष्ठामू



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लयोगेकर्मकालव्याप्त्यभावेनेद्रष्टव्यं दूर्वाष्टमीसदात्याज्याज्येष्ठामूलर्क्षसंयुता तथाच मासेभाद्रपदेमासिशुक्लाष्टम्यांतुभारत
दूर्वामभ्यर्चयेद्भक्त्याज्येष्ठांमूलंचवर्जयेत् ऐंद्रर्क्षेपूजितादूर्वाहंत्यपत्यानिनान्यथा भर्तुरायुर्हरामूलेतस्मात्तांपरिवर्जयेत् इतिम
दनरत्नेस्कांदे शुक्लेभाद्रपदेमासिदूर्वासंज्ञातथाष्टमी सिंहार्कएवकर्तव्यानकन्यार्केकदाचन सिंहस्थेसोत्तमासूर्येत्वनुदितेमुनि
सत्तम मदनरत्नेस्कांदोक्तेः अगस्त्यउदितेतातपूजयेदमृतोद्भवां वैधव्यंपुत्रशोकंचदशजन्मानिपंचच यदातुभाद्रशुक्लाष्ट
म्यांअगस्त्योदयस्तदातत्पूर्वकृष्णाष्टम्यांकार्यं शुक्लपक्षाभावेपिपौर्णिमांतमासेनभाद्रपदमात्रलाभात् यदातुभाद्रपदोधि
कस्तदासिंहार्कएवेतिउदाहृतवचनात् अधिमासेतुसंप्राप्तेनभस्यउदयेमुनेः अर्वागेवव्रतंकार्यंपरतोनतुकुत्रचिदितिनिर्णय
दीपिके स्कांदाद्युक्ताधिकेएवकर्तव्यं इदंस्त्रीणांनित्यं यानपूजयतेदूर्वांमोहादिहयथाविधि त्रीणिजन्मानिवैधव्यंलभतेनात्र
संशयः तस्मात्सर्वप्रयत्नेनप्रतिवर्षंवधूजनैः ज्येष्ठामूलादिरहितापूजयेच्चाष्टमीशुभा कर्तव्याचैकभक्तेनज्येष्ठामूलंयदाभवेत्
ज्येष्ठामभ्यर्चयेद्भक्त्यानवंध्यंदिवसंनयेत् इतिभविष्योत्तरेतुकल्प्यानुष्ठानंनतुसर्वतोलोपः अथदूर्वाष्टमीव्रतं हेमाद्रौभविष्ये
ब्रह्मन्भाद्रपदेमासिशुक्लाष्टम्यामुपोषितः पूजयेच्छंकरंभक्त्यायोनरःश्रद्धयान्वितः सयातिपरमंस्थानंयत्रदेवस्त्रिलोचनः
गणेशंपूजयेद्यस्तुदूर्वयासहितंमुने गणेशःशिवःफलानांशकलैर्दिव्यैर्गंधपुष्पैर्विलेपनैः दूर्वांपूजयतेशानंमुच्यतेसर्वपातकैः शु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चौदेशे भजानतायां दूर्वायां ब्राह्मणोत्तम स्थाप्य लिंगं ततो गंधैः पुष्पैर्धूपैः समर्चयेत् खर्जूरैर्नारिकेरैश्च मातुलिंगफलैस्तथा पूजयेच्छंकरं भक्त्या दूर्वायां विधिवद्द्विज दध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्त्रिलोचने दूर्वाशमीभ्यां संपूज्य मानवः श्रद्धयान्वितः सर्वैस्तु कृतजन्मस्यात्सर्वदेवैस्तु वंदितः विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात् धर्मानाप्नोति धर्मार्थी कन्यार्थी लभते च तां मनसा यद्यदिच्छेत तत्तदाप्नोति मानवः य एवं पूजयेद्दूर्वां भूतेशं मानवः फलैः सप्तजन्मजपापौघैर्मुच्यते नात्र संशयः कृतोपवासः सप्तम्यामष्टम्यां पूजयेच्छिवं दूर्वासमेतं विप्रेंद्र दध्यक्षतफलैः शुभैः दूर्वामंत्रः त्वं दूर्वे ऽमृतजन्मासि वंदितासुरसुरैरपि सौभाग्यं संततिं देहि सर्वकार्यकरी भव यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले तथा विस्तृतसंतानं देहि त्वमजरामरे तल्लिंगमंत्रैरीशान मर्चयेत्प्रयतः शुचिः ततः संपूजयेद्विप्रान् फलैर्नानाविधैर्द्विज अनग्निपक्वमश्नीयाद्दन्नं दधि फलं तथा अक्षारलवणं ब्रह्मन्नाश्नीयान्मधुनान्वितं दद्यात्फलानि विप्रेषु फलाहारः स्वयं भवेत् प्रणम्य शिरसा दूर्वां शिवं शिवमुपाश्नुते एवं यः कुरुते भक्त्या महादेवस्य पूजनं गणत्वं याप्यसौ ब्रह्मन्मुच्यते ब्रह्महत्यया एवं पुण्या पापहरा अष्टमी दूर्वसंज्ञिता चतुर्णामपि वर्णानां स्त्रीजनानां विशेषतः शुक्लाष्टम्यां तु संप्राप्ते मासि भाद्रपदे तथा दूर्वा प्रशस्ता सुरश्वेता मुत्तराशाभिगामिनी पूजयेद्गृहमानीय गंधमाल्यानुलेपनैः फलैर्मूलैस्तथा चैव धूपदीपैश्च पूजयेत् अनग्निपक्वं यत्सर्वं नैवेद्यं चक्रथं च न भोक्तव्यं च तथा ब्रह्मन्ननग्निपक्वं विसर्जयेत्





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दूर्वांकुरस्थांसंपूज्य प्रतिमांशंकरस्यच यौवनंस्थिरमायातियत्रयत्राभिजायते अष्टम्यांफलपुष्पैश्चखर्जूरैर्नारिकेरकैः द्राक्षामोद
कैपिष्टैश्चदाडिमैर्बदरीनथा नारिंगैर्जंबुकैश्चैवतथैवबीजपूरकैः दध्यक्षतैःस्रजोभिश्चधूपैरेवसदीपकैः मंत्रेणानेनराजेंद्रशृणुष्वाव
हितोनृप दत्वापिष्टानिविप्रेभ्यःफलंचविविधंमम्मो तिलपिष्टकगोधूमधान्यपिष्टानिपांडव भोजयित्वाकुटुंबिमित्रैस्वयंबंधुजनैस्तथा
ततोभुंजीतत्वंछेषंस्वयंश्रद्धासमन्वितः कर्तव्याश्चैकभक्तेनज्येष्ठामूलंयदाभवेत् दूर्वामभ्यर्चयेद्भक्त्यानवंध्यंदिवसंनयेत् पक्षेभाद्र
पदस्यैवंशुक्लाष्टम्यांयुधिष्ठिर दूर्वाष्टमीव्रतंपुण्यंयःकरोतिहमानवः नतस्यक्षयमाप्नोतिसंततिःसप्तपौरुषी नंदतेवर्धतेनित्यंयथा
दूर्वातथाकुलं इतिश्रीभ० दूर्वाष्टमीव्रतंसंपूर्णं अथभाद्रशुक्लाष्टमीमारभ्यषोडशदिनपर्यंतंमहालक्ष्मीव्रतं तच्चार्धरात्रमतिक्रम्यवर्ति
न्यांअष्टम्यांकार्यं तदुक्तंचंद्रप्रकाशेस्मृत्यंतरं अर्धरात्रमतिक्रम्यवर्तनेयोत्तरातिथिः तस्यांज्येष्ठायुतायांप्रारंभःकार्यः तथाचस्कांदे
मासिभाद्रपदेशुक्लेपक्षेज्येष्ठायुताष्टमी मारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्मभिः तदभावेकेवलायामपिकार्यं समापनंतुकृष्णा-
ष्टम्यांचंद्रोदयव्यापिन्यांकार्यं चंद्रोदयव्रतेचैवतिथिस्तात्कालिकीभवेत् दिनद्वयेचंद्रोदयसत्वेचकृष्णपक्षेष्टमीचैवेत्यादिवाक्यात्
पूर्वैव अपरदिनेचंद्रोदयोत्तरं त्रिमुहूर्तांचेत्परैव तदुक्तंमदनरत्नेपुराणसमुच्चये पूर्वावापरविद्धावायाप्राप्याचंद्रोदयेसदा त्रिमुहूर्ता
तुसापूज्यापरतश्चोर्ध्वगामिनि अथव्रतविधिःहेमाद्रौस्कांदे अथपूजनं आलयंतेहिकथितंकमलंकमलालये विमलेकमलेल्प

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्मिन् स्थितिंत्वं कृपयाकुरु आवाह० कमलेपाहिमेदेवि स्वर्णसिंहासनं शुभं गृहाणेदंमयादत्तं भक्तियुक्तेनचेतसा आसनं गंगा
दिराखिलाधारंतीर्थमंत्राभिमंत्रितं दूरयात्राश्रमहरं पाद्यंमेप्रतिगृह्यतां, पाद्यं अर्घ्यं० आचम्यजगदाधारे सिद्धिलक्ष्मीजगत्प्रिये चप
लेदेवितेदत्तेतोयंगृण्हनमोस्तुते आचमनं पयोदधिघृतक्षौद्रंसितयाचसमर्पितं स्नानंपंचामृतेनाद्यकुरुदेवदयानिधे पंचामृतं० द
दंतवमहालक्ष्म्याः कर्पूरागरुवासितं तीर्थेभ्यः सुसमानीतंस्नानार्थंप्र० स्नानं सूक्ष्मतंतुभवंवस्त्रंनिर्मितंविश्वकर्मणा लोकलज्जा
हरंदेविगृहाणास्मरसत्तमे वस्त्रं कंचुकीं नानासौभाग्यद्रव्यं मलयाचलसंभूतंघनसारंमनोहरं शीतलंबहुलामोदंचंदनंप्र० चंदनं नीलो
त्पलंमहामोदंमत्तालिकुलसंकुलं आनंदिनंदनोत्पन्नंपद्मं गृण्हनमोस्तुते पुष्पाणि० अथनामपूजा श्रियैनं० लक्ष्म्यै० वरदायै० विष्णु
पत्न्यै० क्षीरसागरवासिन्यै० हिरण्यरूपायै० सुवर्णमालिन्यै० पद्मवासिन्यै० पद्मप्रियायै० मुक्तालंकारिण्यै० सूर्यायै० चंद्राननायै०
विश्वमूर्त्यै० मुक्त्यै० मुक्तिदात्र्यै० ऋद्ध्यै० समृद्ध्यै० तुष्ट्यै० पुष्ट्यै० धनेश्वर्यै० श्रद्धायै० भोगिन्यै० भोगदायै० धात्र्यै० गंधसंभारसन्न
द्धकस्तूरीमोदसंभवं सुरासुरनरानंदि धूपंदेविगृहाणमे धूपं मार्तंडमंडलारवंडचंद्रबिंबाग्नितेजसां निधानंदेविदीपोयंनिर्मितस्तवभ
क्तितः दीपं देवतालयपातालभूतलाधारधान्यजं षोडशाकारसंभारंनैवेद्यंतेनमःसदा नैवेद्यं० स्नानादिकंविधीयंतेयतः शुद्धिःप्रजा
यते एतदाचमनीयंचमहालक्ष्मिविधीयतां आचमनं० करोद्वर्तनं० पातालतलसंभूतंवदनांभोजभूषणं नानागुणसमाकीर्णंतांबूलं





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रतिगृह्यतां तांबूलं हिरण्यगर्भेतिदक्षिणां आज्यंचेतिनीराजनं शारदेंदुकलाकांतिः स्निग्धनेत्राचतुर्भुजा पद्मयुग्माचाभयदाक
रव्यग्रकरांबुजापुष्पांजलिं विष्णोर्वक्षसिपद्मेचशंखेचक्रेगदावरे लक्ष्मीदेवियथासित्वंमयिनित्यंतथातव प्रार्थना उत्तार्यदोरकंबाहोर्ल
क्ष्मीपार्श्वेनिवेदयेत् लक्ष्मीदेविगृहाणत्वंदोरकंयन्मयाधृतं कथांश्रुत्वासुवर्णंचदत्वाचार्यायदक्षिणां एवंनिवर्त्यविधिवत्पूजनंबटुक
स्यच चातुर्वर्ण्यंचसंभोज्ययथाशक्त्यान्नदक्षिणां दीपांश्चषोडशापूपान्गोधूमानांद्विजातये दत्वातत्संख्ययाभुक्त्वारात्रौजागरणं
चरेत् चंद्रोदयेचसंजातेअर्घ्यंदद्यात्ततोव्रती मंत्रेणानेनविप्रेंद्रशंखेनांबुफलान्वितं नमोस्तुतेनिशानाथलक्ष्मीभ्रातर्नमोस्तुते
व्रतंसंपूर्णतांयातुगृहाणार्घ्यंनमोस्तुते चंद्रायार्घ्यं प्रातर्विसर्जयेद्देवींमंत्रेणानेनसुव्रत पंकजेदेविसंत्यज्यममवेश्मनिसाविश यथा
सपुत्रभृत्योहंसुखीस्यांतत्प्रसादतः विसर्जनं इतिपूजनं अथकथा स्कंदउवाच सौभाग्यजननंस्त्रीणांदौर्भाग्यपरिकृंतनं
परमैश्वर्यजननंतद्व्रतंब्रूहिशंकर ईश्वरउवाच साधुसाधुमहाबाहोयत्पृष्टोहंत्वयानघ तत्राहंसंप्रवक्ष्यामिव्रतानामुत्तमव्रतं ये
नचीर्णेननरोदुर्गतिंयातिकर्हिचित् सुभगादुर्भगावापिस्त्रियोवाविधवागुह अस्तिदेव्याव्रतंपुण्यंमहालक्ष्म्याःषडानन नारीणांचनरा
णांचसर्वदुःखापहंतथा देवासुरमभूद्युद्धंपूर्णमब्दशतंपुरा वृत्रेसुराणामधिपेदेवानांचपुरंदरे तत्रदेवैर्महावीर्यैर्नारायणबलाश्र
यात् असुरानिर्जिताःसर्वेपातालतलमाययुः केचिद्विलंघिताःकेचित्प्रविष्टावरुणालयं गिरिदुर्गसमाश्रित्यकेचित्तस्थुर्महाबलाः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अ·रा·
१२८

तत्रकोलासुरोनाममहावीर्योमहाबलः गोमंतंदुर्गमंदुर्गंगिरिमाश्रित्यनिर्भयः याराजकन्यकालोकेरूपवत्योमहागुणाः आनी-
यगिरिदुर्गस्थोरमयामाससर्वशः रमयित्वापितास्तत्रकामरूपीविहंगमः एतस्मिन्नेवलोकेतुआगतोमुनिसत्तमो श्रुतिप्रभावसं
पन्नोपुलस्त्योगोतमस्तथा तीर्थयात्राप्रसंगेनश्रुत्वावाक्यंजनस्यतत् कोलासुरजयमितिकन्याहेतोःशिखीध्वज नाबूवतुर्जनंस
र्वमगस्त्योस्तिमहामुनिः येनतोयनिधिःपीतोविंध्याचलनिवासिना वातापील्वलनामानौदैत्यौयेनविनाशितौ तंगच्छामोवयंस-
र्वेकोलासुरवधायच इत्यामंत्र्यजनाःसर्वेगत्वातमभिवाद्यच ऊचुःसर्वंयथावृत्तंकोलासुरविचेष्टितं तच्छ्रुत्वाभगवानाह
मैत्रावरुणिरग्र्यधी सृष्टिस्थितिविनाशानांकारणंभक्तवत्सलाः रामस्यादौतपस्यंतिब्रह्मविष्णुमहेश्वराः तिस्रःसंध्याभू
र्तिमत्यतेषांसुश्रूषणेरताः प्रविश्यतामहालक्ष्मीःशक्तिरूपेणासंस्थिता सर्वशक्तियुतादेवीलोकानांहितकाम्यया इत्यु
क्त्वात्वरितंगत्वाकोलासुरवधाप्तये निवेद्यनिखिलंतेभ्यस्तस्थुःप्रांजलयोजनाः तच्छ्रुत्वानिखिलंतेभ्योब्रह्मविष्णुमहेश्वराः
संध्यात्रयंसमाहूयवाचंप्रोचुर्जनेश्वराः हनिष्यतिमहालक्ष्मीर्युद्धेकोलासुरंरिपुं भगवत्योमूर्तिमत्योदंडशूलादिभिर्वरैः आ
युधैर्विविधैःकृत्वाजयमाप्स्यथसंयुगे युष्माकंतुसहायोसौयुष्मत्क्रोधसमुद्भवः भूतनाथोभूतमन्युर्यःसहायोभविष्यति
इत्युक्त्वात्वरितंगत्वारुरुधुःकोलराक्षसं निरुध्यचपुरींदेव्योजगर्जुर्जलदस्वनाः भिंदंत्यश्चदिशस्तद्वद्धर्षयंत्यश्चतत्कुधं को

अ·
८

१२८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लासुरोपितच्छ्रुत्वाप्रोत्पपातमहासनात् रोषेणक्रोधताम्राक्षोमेरोरिवमृगांतकः हस्त्यश्वरथपादातचतुरंगबलान्विता नि-
र्ययौपृतनायोद्धुं कालिकायाइवाशनिः सकुंडलशिरस्त्राणकवचीधृतबाणधीः बद्धगोधांगुलित्राणःक्रुद्धोंतकइवापुरः ततो
राक्षससैन्यंतद्भूतनाथेनसंगतं देवनारीमनोल्लासियुद्धंशक्रेतिभीषणं महारावैर्भीमघोषैर्बाणैःक्रेंकारनिस्वनैः गोरखुराणां
निनादैश्चलोकःशब्दमयोभवत् जयभिंधीति वदतांधावतामितरेतरां ववृधेसमरंघोरंमुष्टामुष्टिकचाकचि उद्धतोराक्षसब
लेभूतनाथोमहाबलः ममर्दराक्षसानीकंशरवर्षैश्चदारुणैः हतंदृष्ट्वासुरबलंक्रुद्धकोलासुरोरणे अभिद्रुत्यगदा-- पाणिस्ता
डयामासभैरवं ययौमूर्च्छांमहावीर्यस्तेनाभिहतमस्तकः ततोदेव्योतिवेगेनत्वभिदुद्रुवुरुद्धये त्रिशूलैरभिजघ्नुस्तंपट्टिशै
श्चव्यघातयत् मुष्टिभिस्ताडयामासुर्नखैश्चाभिव्यदारयन् पादघा न यामासुर्नखैश्चाभिव्यदारयन् पादघातैसमाजघ्नुःसिं
हःकरिवरंयथा सकुंडलशिरस्त्राणोदष्टोष्टोरक्तलोचनः कृतभ्रुकुटिवक्त्रोसौराक्षसस्तांमुहुर्मुहुः गदयाताडयामासशिरः
-- कंगांसकुक्षिषु बभंजुस्तांगदांतांतुहसंत्यस्तामदाकुलाः ततोधनुर्धरोभूत्वाबाणजालमवाकिरत् तासांशरीरमर्माणि-
भिंदन्छरपुरोगमैः ननादबद्धवैरोसौहृदयंचाभिनच्छरैः ततःक्रुद्धतरास्तास्तुपादेनजगृहुर्भृशं आकाशेभ्रामयित्वातांचिक्षि-
पुर्गगनेक्रुधा कोलासुरोपिपतितोयावदुत्थातुमिच्छति स्तावंनिर्मत्यलक्ष्मीस्तंपादाभ्यांमत्यपीडयत् तत्पादपीडितोदैत्योवि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्र·रा·
१२९

सत्यनयनेभृशं मुक्तकंठस्तवनंकृत्वाततोमोहमुपेयिवान्. ततोदेवाःसगंधर्वामनुष्याऋषयोस्तुवन् देवनाथश्चदेव्यश्चननृतुःप्रमदा-
कुलाः देवदुंदुभयोनेदुःपुष्पवृष्टिःपपातह दिशःप्रसेदुर्मरुतोववुर्मंदरवंजगत् सुरीसुरशिरोरत्नापीडितांघ्रिसरोरुहाः देव्योदि
व्येनयानेनयातिकोलापुरंप्रति आयांतिपद्मजांवीक्ष्यमुक्तपादविश्टंखलः तुष्टावपरयाभक्त्याराजकन्यागणोमुदा राजकन्याऊचुः
वंदारुवीरसुरवृंदकिरीटरत्नरोचिच्छटानिकरकल्पितरत्नदीपं देवित्वदीयचरणंशरणंजनानांसेवामहेसकलमंगलवर्धनाय उत्फु
ल्लकैरवदलायतलोचनायैगंडोल्लसच्चपलकुंडलमंडितायै राकाशशिप्रतिभटाननकोमलायैतस्यैनमःकमललोचनवल्लभायै स
द्रत्नकल्पलतिकांकरिकंठभूषांकेयूरहेमकटकोज्ज्वलकंकणांकां संसारसागरमुखेपततोममाद्यदेहित्वदीयकरयष्टिमनंगमातः
दृष्ट्वादेविजनाजयायविविधाब्रह्माधिपत्यंगताविष्णुर्वक्षसियांचकारतरलांलीलाब्जमालाभ्रमं केशाग्रग्रहितेत्वदीयचरणद्वंद्वाब्ज
सेवारतंकारुण्यामृतसारपूरितदृशामामंबपाहीश्वरी मल्लिकाफुल्लकुसुमोज्ज्वलमध्यभागं धम्मिल्लभारजिततारकवृंदशोभां उत्त
प्तहेमनिकषोज्ज्वलकायकांतिर्लक्ष्मीःस्वयंप्रणमतांश्रियमातनोति इतिस्तुत्वामहालक्ष्मींभक्तानामिष्टदायिनीं योगिन्योद्यभ-
विष्यध्वमितितासांवरंददौ दृष्ट्वातास्तुमुदेविसारूप्यंचप्रदापयेत् ताभिर्निषेवितादेविवरंवर्यंददौमुदा राजकन्यास्ततःसर्वामुक्ताः
स्वपुरमाययौ ततःप्रभृतिलोकेषुपूज्यास्युःसर्वकामदाः ताश्चतुःषष्टियोगिन्योमहालक्ष्मीपरिग्रहात् नृत्यंतिनिवहेस्तत्रगीतवा

अ·
८

१२९

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दित्रनिःस्वनैः पुरादेव्यामहालक्ष्म्याकरहाटपुरेनिशि एवंप्रभावासादेवीविष्णुरामाषडानन व्रतस्यास्यविधानंचशृणुमन्त्रोवि-
धानतः मासिभाद्रपदेशुक्लेपक्षेज्येष्ठायुताष्टमी प्रारब्धव्यंव्रतंतत्र महालक्ष्म्यायतात्मभिः करिष्यामिव्रतंदेवित्वद्भक्तस्त्व
त्परायणः तदविघ्नेनमेयातुसमाप्तिंत्वत्प्रसादतः इत्युच्चार्यततोबध्वादोरकंदक्षिणेकरे षोडशग्रंथिसहितंगुणैःषोडशभिर्यु
तं ततोन्वहंमहालक्ष्मींपूजयेन्नियतात्मवान् गंधपुष्पैःसनैवेद्यैर्यावत्कृष्णाष्टमीदिनं तस्मिन्दिनेतुसंप्राप्तेकुर्यादुद्यापनंव्रती व-
स्त्रमंडपिकांकृत्वामाल्याभरणशोभितां त्रिभूमिंकांचनंश्लक्ष्णांनानादीपैश्चशोभितां चतस्रःप्रतिमांकृत्वासौवर्णीस्तत्स्वरूपिणी
स्नपनंकारयेत्तासांपंचामृतविधानतः षोडशैरुपचारैश्चधूपदीपादिभिस्तथा जागरंतत्रकर्तव्यंगीतवादित्रनिःस्वनैः ततोनिशीथे
संप्राप्तेभ्युदितेमृतदीधितौ कृत्वातुस्थंडिलेपद्मंषडंगंपूजयेत्ततः दद्यादर्घ्यंचरागेणव्रतीतस्मैसमाहितः क्षीरोदार्णवसंभूतचंद्रलक्ष्मी
सहोदर पीयूषधामरोहिण्यासहितोर्घ्यंगृहाणवै क्षीरोदार्णवसंभूतेकमलेकमलालये प्रयच्छसर्वकामान्मेविष्णुवक्षस्थलाश्र
ये पुत्रान्देहियशोदेहिसौख्यंसौभाग्यमेवच कालिकालिमहाकालीविकरालिनमोस्तुते त्रैलोक्यजननित्राहिवरदेभक्तवत्सले
एकनाथेजगन्नाथेजमदग्निप्रियेनघे रेणुकेत्राहिमांदेविरामममातःशिवंकुरु कुरुश्रियंमहालक्ष्मीत्वामिच्छामिसर्वाशुभनाशाय मंत्रैरेतैर्म
हालक्ष्मीमार्घ्यैश्चोत्सृष्टयोषितः श्रीसूक्तेनतथावह्नौपद्मानिजुहुयाच्छुचिः पायसंचैवबिल्वानितदलाभेतथाघृतं ग्रहेभ्यश्चैवदातव्यं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

समिच्चरुतिलादिकं चंदनंतालपत्रंचपुष्पमालादिकंतथा नवेशरावेभक्ष्याणिक्षिप्त्वाबहुविधानिच प्रत्येकंषोडशैतानिपूगपूर्णानि
चैवहि तान्यन्येनसमाच्छाद्यव्रतीदद्यात्समंत्रकं क्षीरोदार्णवसंभूतालक्ष्मीश्चंद्रसहोदरा व्रतेनानेनसंतुष्टाप्रीयतांविष्णुवल्लभा
इंदिराप्रतिगृण्हातिइंदिरावैददातिच इंदिरा तारकोभाभ्यामिंदिरायैनमोनमः दद्यादुपायनादीनिश्रोत्रियाणांचयोषितां ततस्तः प्र-
तिमास्तास्तुब्राह्मणायनिवेदयेत् एवंकृत्यंतुनिर्वर्त्यव्रतीभोजनमाचरेत् स्कंदउवाच केनेदंस्वीकृतंपूर्वंकथमस्मिन्प्रकाशितं ब्रू
हिमेतत्वतोदेवयद्यहंतववल्लभः शंकरउवाच आसीद्राजासार्वभौमोमंगलार्णइतिश्रुतः कौंडिण्येनगरेरम्येतस्यपद्मावतीप्रिया
तमागतकश्चिदेकःसेवकोब्राह्मणोत्तमः अज्ञातनाम्नस्तस्यासौनामचक्रेनृपस्तदा तवल्लकइतिख्यातोबभूवद्विजसत्तमः कदा
चिन्मृगयासक्तोभूपालोवनमाविशत् तत्रविध्वावराहादिन्मृगान्हत्वासहस्रशः क्षुत्तृट्परिगतःश्रांतोवृक्षमूलमुपाश्रितः उदकान्
वेषणेचारान्प्रेषयामाससर्वशः वनेजलंतुनापश्यन्कचित्तृच्छांताःप्रयत्नतः तेनत्वानृपतिंप्रोचुर्नात्रांभइतिदुःखिताः तवल्लको-
पिबभ्रामविपिनंतद्गतंद्रितः भ्रममाणःस्तदापश्यत्कस्मिंश्चिद्वनगव्हरे रम्यंसरोवरंदिव्यंकुमुदोत्पलमंडितं तत्रापश्यद्देवकन्या
दिव्यरूपमनोरमाः चार्वंगीश्चारुनयनापीतोन्नतपयोधराः हारकंकणकेयूरनूपुरालंकृताःशुभाः पूजयंतिर्महालक्ष्मींव्रतरूपेण-
चादरात् तवल्लुकोपिपप्रच्छकिमिदंकथ्यतामिति स्त्रियऊचुः महालक्ष्मीव्रतमिदंसर्वकामफलप्रदं क्रियतेस्माभिरेकाग्रम





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नोभिस्तत्तुभक्तितः तवल्लकोपितच्छ्रुत्वाव्रतंजग्राहभक्तिमान् तदनुज्ञांगृहीत्वाचजलमादायसत्वरः आजगामजलंतस्मैदत्वाचांभो
जनैःसह जलंपीत्वानृपस्तस्यदृष्टवान्दोरकंकरे किमिदंदोरकंविद्वन्किंव्रतंकृतवानसि राज्ञापृष्टस्तवल्लोपिकथयामासतद्व्रतं तच्छ्रु
त्वाराजशार्दूलोव्रतंजग्राहभक्तिमान् तवल्लकेनसहितोराजास्वपुरमाययौ पद्मावत्यागृहंगत्वातयारंतुंगतःसह रममाणाथसंदि
वीतेनराज्ञाप्रियेणवै तंदृष्ट्वादोरकंहस्तेकुपितात्यंतकोपना कयात्वंवंचितोब्रूहिकयादत्तःस्रुदोरकः ज्वालामालाकुलेवन्हौक्षि-
प्तवत्यतिकोपिता हाहाकष्टमिदंपापंकृतंमूढतयात्वया इतिनिर्भर्त्स्यतांराजातत्याजवनगव्हरे सात्वहानिंययौपश्चात्तत्रहानिंय-
यौनृपः महालक्ष्म्यापचारेणसारण्येजलवर्जिते मृगमाणावनेतस्मिन्नकश्चिद्धृतिमाप्नुयात् विचरंतींवनेतत्रऋषेःकस्यचिदा
श्रमं ददर्शमृगसंकीर्णंशांतकृष्णमृगान्वितं तत्रापश्यद्वनेरम्येवसिष्ठंमुनिपुंगवं ववंदेचरणौतस्यविसंज्ञादुःखकर्शिता
चिरंध्यात्वामुनिस्तस्याज्ञातवान्दुःखकारणं महालक्ष्म्यापचारेणज्ञातंविज्ञानचक्षुषा तद्व्रतंकारयामासतस्यादुःखोपशांतये
तद्दुःखंतत्क्षणादेवविनिष्टमभवत्तदा पुनश्चमृगयासक्तोभूपालोवनमाविशत् कश्चिन्मृगंसमाविध्यबाणेनैकेनबाहुमान्
अन्वगच्छन्मृगपदंतस्याश्रमंचयदागमः वरंमुनिंददर्शाग्रेवसिष्ठंवीतकल्मषं कृतातिथ्यक्रियोदृष्ट्वाचरंतींबहिरंतिके हा
वभावकटाक्षैश्चहरंतींहरिणेक्षणां मदान्निर्गत्यनृपतिःप्रोवाचसस्मितंवचः रंभोरुकाशिकल्याणिकिमर्थंचरसेवने किन्न

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

खचक्रगदापद्मरमागरुडशोभितं सेवितंमुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः एवंविधं हरिंध्यात्वाततोयजनमारभेत् ध्यानं आवाहया-
मिदेवेशभक्तानामभयप्रद संनिधंवरदंशांतंमनसावाहयाम्यहं आवाहयामि॰ सुवर्णमणिभिर्दिव्यैःखचितेदेवनिर्मिते दिव्यसिंहा
सनेस्निग्धेप्रविशत्वंसुराधिप आसनं गंगोदकंसुरश्रेष्ठसुवर्णकलशस्थितं गंधपुष्पाक्षतैर्युक्तंगृहाणरमयासह पाद्यं अष्टगं
धसमायुक्तंस्वर्णपात्रेस्थितंजलं अर्घ्यंगृहाणभोदेवभक्तानामभयप्रद अर्घ्यं देवदेवनमस्तुभ्यंपुराणपुरुषोत्तम मयादत्तमिदं-
तोयंगृह्णीष्वाचमनीयकं आचम॰ पयोदधिघृतैःस्नानंमधुशर्करयायुतैः मध्येमध्येचपूजाचकर्तव्याप्रतिभिःसदा पंचामृतस्नानं
नदीनांचैवसरसांमयानीतंजलंशुभं अनेनस्नानंकुरुभोमंत्रैर्वारुणसंभवैः स्नानं वस्त्रयुग्मंसमानीतंपट्टसूत्रेणनिर्मितं सूक्ष्मंकार्पा
सतंतूनांसुवर्णेनविराजितं वस्त्रं नारायणनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम यज्ञोपवीतं केयूरसुकुं
डैश्चैवनूपुरैरंगुलीयकैः पूजितोसिमयायत्नेनरत्नैराभरणैर्विभो आभरणानि चंदनंमलयोद्भूतंकस्तूर्यगुरुसंयुतं कर्पूरेणचसंमिश्रंस्वी
कुरुष्वानुलेपनं चंदनं शतपत्रैःकर्णिकारैश्चंपकैर्मल्लिकादिभिः पुष्पैर्नानाविधैश्चैवपूजयामिसुरेश्वर पुष्पाणि दशांगोगुग्गुलोद्भूतः
सुगंधिश्चमनोहरः आघ्रेयोदेवदेवेशधूपोयंप्रतिगृह्यतां धूपं एकार्तिकंसुरश्रेष्ठगोघृतेनसुवर्तिना संयुक्तंतेजसाकृष्णागृहाणादित्य-
दीपित दीपं अन्नंचपायसंभक्ष्यंसिताज्यलेह्यसमन्वितं दधिक्षीरघृतैर्युक्तंगृहाणसुरपूजित नैवेद्यं नागवल्लीदलैर्युक्तंपूगीफलसमन्वितं कर्पू

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रखदिरैर्युक्तं तांबूलं प्रतिगृह्यतां तांबूलं हिरण्यगर्भेति दक्षिणां नीराजनं [illegible] र्त्तिभिराहृतं तेजोराशिमयादत्तं लोकानंदकर
प्रभो नीराजनं अंजलिस्थानिपुष्पाणि अर्पयामि जगत्पते गृहाण सुमु[illegible]दायक पुष्पांजलिं यानिकानीनि प्रदक्षि-
णां नमस्ते देवदेवेश नमस्ते गरुडध्वज नमस्ते विष्णवे तुभ्यं व्रतस्य फलदा[illegible]नु मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर
व्रतेनानेन सुप्रीतः संपूर्णफलदो भव प्रार्थना कृतस्य कर्मणः सांगतासिद्ध्यर्थं[illegible]नेक० परमान्नमिदं दिव्यं कांस्यपात्रेण संयु
तं वायनकं द्विजवर्याय सहिरण्यं ददाम्यहं इति पूजा समाप्ता अथ कथा व्यासं वसि[illegible]रं शक्तेः पौत्रमकल्मषं पराशरात्मजं वंदे शुक
कृतातं तपोनिधिं सूत उवाच द्वापरे द्वारवत्यां तु नारदः कृष्णदर्शनात् उत्साहे[illegible]दर्शयदुनंदनं पूजितश्चैव कृष्णेन विष्टरादि-
भिरादरात् ततः प्रोवाच तं विष्णुर्नारदं लोकपूजितं श्रीकृष्ण उवाच श्रृणु[illegible]वने विचरन् सदा लोकांतरेषु चरितं यद्विशेषं
वदस्व मे नारद उवाच भगवन् देवदेवेश भक्तोस्मि तवनांकिलः तत्राश्चर्यमिदं[illegible]दसि स्थितं तत्र सर्वे समासीनाः सुराः इंद्राश्च
तुर्दश आदुश्चैकादश रुद्रा आदित्या द्वादश स्मृताः वसवोष्टौ तथा नागा यक्ष[illegible] सर्वे पममाहुश्च स्थितं सिंहासने शुभे मानुष्यं दु
दुभेश्च मौर्छादनार्थं वदस्व नः यम उवाच चातुर्मास्यव्रतं चैकं संक्रांतिव्रतमेव[illegible]नार्यस्तासामाच्छादनं त्वचा कुर्वंतु दुंदुभेश्च्या
स्यचिन्चार्यध्वं महाभटाः तेतस्यवचनं श्रुत्वा भटाः सर्वे विशीर्णभुवं स्वामिनि[illegible]त्वां भवदामिन तच्छ्रुत्वा ललितं कृष्णः प्राह

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र. रा.
१७६

लोकान्पुरस्थितान् तथाकुर्वंतुलोकाश्चनार्यः पुर्यांनिसंतिहि तच्छ्रुत्वान्वा [illegible] नारी [illegible] र्नगरेषुन कृष्णाज्ञयाकृष्णादूताः प्रोचुस्तेस
र्वयोषितः पुरःसराः प्रश्रृण्वंतु नगरस्थाश्चयोषितः अन्यच्चयत्रकुत्रापिउ [illegible] दनं त्वत्सोदरींविनास्वामिन्नान्यानार्योत्रसंति
हि तच्छ्रुत्वाभयसंत्रस्तः सोदरीमत्यभाषत श्रीकृष्णउवाच सुभद्रेकिंक [illegible] आगता [illegible] मसेवकाः व्रतंत्वयाकृतंभद्रेपुरापुण्योद्भवं
शुभं सुभद्रोवाच सर्वव्रतानिहेकृष्णकृतान्यद्यनसंशयः नोचेत्त्वत्सोद [illegible] प्यर्जुनस्यच नस्यांमाताभिमन्योर्वैयम
दूताःकथंविभो श्रीकृष्णउवाच कुरुत्वंभगिनीमेद्यव्रतमेकंशुभमदं [illegible] ख्यातंव्रतंलोकेषुविश्रुतं सूतेनकथितंपूर्व
मृषीणांहितकाम्यया नैमिषंहिमवत्पार्श्वेसिद्धाश्रममनुत्तमं तत्रसू [illegible] यज्ञमुत्तमं तंदृष्ट्वामुनयःसर्वेहर्षिताः
श्चमुहुर्मुहुः अर्चितश्चततःसर्वैरर्घ्यादिभिर्यथाविधि अभ्यर्च्यतंमुनि [illegible] तिपूर्वकं ऋषयऊचुः भवांल्लोकस्यधर्मे
शोभक्तानांज्ञानसाधनः समर्थःसर्वमुक्तीनां सर्वसौभाग्यकारकं कृपया [illegible] कथयस्वोत्तमव्रतं सूतउवाच शृणुध्वमृषयः
सर्वव्रतानामुत्तमव्रतं गोपद्ममितिविख्यातं सर्वपापहरंपरं सर्वदुःखोपश [illegible] दायकं यमस्यदंडनंयस्माद्दूरीकृतमनुत्त
मं सुवासिन्यास्तुसौभाग्यपुत्रपौत्रप्रवर्धनं ऋषयऊचुः कस्मिन्मासि [illegible] कस्यपूजनं केनचीर्णंपुरा साधोनत्स
र्वंकथयस्वनः सूतउवाच आषाढशुक्लपक्षस्यएकादश्यांविशेषतः तद [illegible] द्वादश्यांतंव्रतंचरेत् गोष्ठेचशुद्धगोस्थाने

ए.
११

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गोमयेनोपलिप्यच त्रयस्त्रिंशच्चपद्मानिकारयेद्व्रीहिपिष्टकैः शोभयेत् [illegible] पुष्पैःप्रपूजयेत् तत्संख्ययाचकर्तव्यानम-
स्कारप्रदक्षिणाः तत्संख्ययाद्यपूपांश्चब्राह्मणायनिवेदयेत् वायनंद्वि [illegible] वत्सरेशुभे द्वितीयेवत्सरेदद्यात्पायसंसेवनि
र्मितं तृतीयमंडकान्दद्यात्चतुर्थेपूर्णामिश्रितं पंचमेघारिकादद्यात्पूर्णे [illegible] एकादश्यामुपवसेद्दंतधावनपूर्वकं मंडपंकार
येत्तत्रकदलीस्तंभमंडितं नानापुष्पैश्चशोभाढ्यमखरंतत्रकारयेत् तन्म [illegible] पंचरंगैःसमन्वितं पुण्याहंवाचयित्वातुप्रतिमा
यांयजेद्धरिं कर्षमात्रसुवर्णेनतदर्धार्धेनवापुनः आचार्यंवरयित्वाचक [illegible] नः लक्ष्मीनारायणंस्थाप्यसौवर्णेनप्रकल्पितं ब्र
ह्माद्यावाहनंतत्रपूजयेद्धूपदीपकैः द्वादशैवतुनामानिप्रत्येकंपूजयेद्व्रती [illegible] कृत्वागीतवाद्यादिमंगलैः ततःप्रभातेउत्थाय-
स्नात्वाहोममनुकारयेत् सतिलाज्यसमिद्द्रव्यंहुनेद्द्वादशनामभिः पायसं [illegible] त्वापूर्णाहुतिंचरेत् वत्सेनसहितांधेनुंआचार्या
यनिवेदयेत् विप्रान्पंचसपत्नीकान्भोजयेत्षड्रसैर्व्रती भुंजीतबंधुभि [illegible] कृतमानसः अन्यानपियथाशक्त्याब्राह्मणान
पिभोजयेत् कृत्वाचेदंव्रतंपुण्यंसर्वान्कामानवाप्नुयात् अंतेस्वर्गपदंगच्छे [illegible] वर्जितः कृष्णास्यवचनंश्रुत्वासुभद्रातत्तथाकरो-
त् पंचाब्दव्रतमेतस्याराज्ञोयामचतुष्टये गोपद्मानिचसंपूज्यप्रातर्हुत्वाहु [illegible] कृतेपश्चात्सुरीयमभटाविशन् यमभटाऊचुः सु
भद्रेतवदेहस्यचमर्थेचागतावयं सुभद्रोवाच गोष्ठेपद्मानिचान्यत्रसर्वपश्यं [illegible] अन्योन्यवादसमयेविष्णुदूताःसमागताः तांदृष्ट्वाताडया

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

व्र. रा.
१७७

मासकृव्रतस्यास्यप्रभावतः पलायितामहाभीताः स्मरंतोयमशासनं तांदृष्ट्[illegible]गानृयमोभयसमन्वितः कस्येदंकृत्यमितिचज्ञात्वानी

द्रियदर्शनात् उवाचदूताः शृणुतयत्रसंपूज्यतेहरिः नगंतव्यंभवद्भिश्चसत्यं[illegible]प्राप्तवंतोदेववशाद्विविशाध्वंमहाभटाः इत्युक्त्वा

धर्मराजोसौशालायांचविवेशह तैनैवऋषिणांमध्येकथितंव्रतमीदृशं द[illegible]न्येराज्यभ्रंशात्कृतंव्रतं व्रतस्यास्यप्रभावेनराज्य

सौभाग्यसंपदः पुत्रपौत्रादिसौभाग्यंभुक्त्वामोक्षमवाप्नुयात् ऋषयऊचुः[illegible]र्थोभोगच्छामःस्वाश्रमालयं प्रणम्यमुनिभिः

साकंसूतश्चांतर्हितोभवत् मुनिभिःसर्वलोकेषुकथितंव्रतमुत्तमं नातःपर[illegible]लोकेषुविश्रुतं इतिश्रीभविष्योत्तरपुराणेगोप

द्मव्रतोद्यापनंसंपूर्णं अथपुरुषोत्तममासस्यैकादशी युधिष्ठिरउवाच भ[illegible]शामिव्रतानामुत्तमव्रतं सर्वपापहरंचैवफलमुक्ति

प्रदायकं पुरुषोत्तममासस्यकथांब्रूहिजनार्दन कोविधिःकिंफलंतस्यको[illegible]मधिमासेतुसंप्राप्तेव्रतंब्रूहिजनार्दन कस्यदा

नस्यकिंपुण्यंकिंकर्तव्यंनृभिःप्रभो कथंस्नानंचकिंजाप्यंकथंपूजाविधिःस्न[illegible]त्तमंचान्नंमासेवैपुरुषोत्तमे श्रीकृष्णउवाच

कथयिष्यामिराजेंद्रभवतःस्नेहकारणात् अधिमासेतुसंप्राप्तेभवेदेकादशी[illegible]मनामेतितिथीनामुत्तमातिथिः तस्याश्चैवप्रभा

वेनकमलाभिमुखीभवेत् ब्राह्मेमुहूर्तेचोत्थायस्मृत्वातंपुरुषोत्तमं स्नात्वाने[illegible]नियममाचरेत् गृहत्वेकगुणंजाप्यंनद्यांदशगु

णंस्मृतं गवांगोष्ठेशतगुणमग्न्यागारेदशाधिकं शिवक्षेत्रेषुतीर्थेषुदेवता[illegible]हस्रंशतकोटीनामनंतंविष्णुसन्निधौ अवं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्यामभवद्विप्रः शिवधर्मेतिनामतः तस्यात्मजेषुपंचेषुकनिष्ठोदुष्टकर्मकृत् तदापित्रापरित्यक्तस्त्यक्तः स्वजनबंधुभिः स्वकर्मणः प्रभा
वेनगतोदूरतरंवनं एकदादैवयोगेनतीर्थराजंसमागमत् क्षुत्क्षामोदीनवदनस्त्रिवेण्यांस्नानमाचरत् ऋषीणामाश्रमंतत्रविचिन्वन्क्षु
धयार्दितः हरिमित्रमुनेस्तत्रत्वाश्रमंवददर्शह पुरुषोत्तममासेतु श्रद्धयाकमलास्तुता एकादशीपुण्यतमाभुक्तिमुक्तिप्रदायिनी पुरु
षोत्तममासस्यजनानांचसमागमे यत्राश्रमेकथयतांकथांकल्मषनाशिनीं जपन्श्रमेणतांश्रुत्वाकमलांपापहारिणीं व्रतंकृतंचतैः सा
र्द्धंस्थित्वाशून्यालयेतदा निशीथेसमनुप्राप्तेकमलात्रसमागता वरंददामिभोविप्रकमलायाः प्रभावतः विप्रउवाच कात्वंकस्यासिरं
भोरुप्रसन्नाचकथंमम ऐंद्रीत्वमिंद्रदेवस्यभवानीशंकरस्यच वधूर्वाचंद्रसूर्यस्यगंधर्वीकिन्नरीतथा त्वत्सदृशीनदृष्टाचनश्रुताचशु
भानने लक्ष्मीरुवाच प्रसन्नासांप्रतंजातावैकुंठादहमागता प्रेरिताहरिदेवेनएकादश्याः प्रभावतः पुरुषोत्तममासस्यकृष्णापक्षेतुया
भवेत् कमलानामसाप्रोक्ताकमलांदातुमागता पुरुषोत्तममासस्ययापक्षेप्रथमाभवेत् तस्याव्रतंत्वयाचीर्णंप्रयागेमुनिसन्निधौ व्र
तस्यास्यप्रभावेनवशगाहंनसंशयः तववंशेभविष्यंतिमानवाद्विजसत्तम लभंतेमत्प्रसादंतुसत्यंतेव्याहृतंमया विप्रउवाच प्रसन्ना
यदिमेपद्मेव्रतंविस्तरतोवद यत्कथासुप्रवर्त्तंतेराजानोयेजगद्धिताः लक्ष्मीरुवाच श्रोतॄणांपरमंश्राव्यंपवित्राणामनुत्तमं दुःस्वप्रना
शनंपुण्यंश्रोतव्यंयत्नतस्ततः उत्तमःश्रद्धयायुक्तः श्लोकंश्लोकार्धमेवच पठित्वामुच्यतेसद्योमहापातककोटिभिः मासानांपरमोमासः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पक्षिणांगरुडोयथा नदीनांचयथागंगातिथीनांद्वादशीतिथिः तमर्चयंतिविबुधानारायणमनामयं येयजंतिसदाभक्त्यानारायण
मनामयं तानर्चयंतिसततंब्रह्माद्यादेवतागणाः नारायणपरायेचहरिकीर्तनतत्पराः हरिप्रजागरायेचकृतार्थास्तेकलौयुगे शुक्ले
वायदिवाकृष्णोभवेदेकादशीद्वयं गृहस्थानांचपूर्वातुयतीनामुत्तरास्मृता एकादशीद्वादशीचरात्रिशेषेत्रयोदशी व्रतेक्रतुशतंपुण्यं
त्रयोदश्यांतुपारणे एकादश्यांनिराहारःस्थित्वाहमपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत अमुंमंत्रंसमुच्चार्यदेवदेवस्यचक्रि
णः भक्तिभावेनतुष्टात्माचोपवासंसमर्पयेत् देवदेवस्यपुरतोजागरंनियतोव्रती गीतैर्वाद्यैश्चनृत्यैश्चपुराणपठनादिभिः ततःप्रातःसमु
त्थायद्वादशीदिवसेव्रती स्नात्वाविष्णुंसमभ्यर्च्यविधिवत्प्रयतेंद्रियः पंचामृतेनसंस्नाप्यएकादश्यांजनार्दनं द्वादश्यांचपयस्नानंहरेःसारू
प्यमश्नुते अज्ञानतिमिरांधस्यव्रतेनानेनकेशव प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभव एवंविज्ञाप्यदेवेशंदेवदेवंचचक्रिणं ब्राह्मणान्भोज
येत्पश्चात्तेभ्योदद्याच्चदक्षिणां ततःसबंधुभिःसार्द्धंनारायणपरायणः कृत्वापंचमहायज्ञान्स्वयंभुंजीतवाग्यतः एवंयःप्रयतःकुर्यात्पु
ण्यमेकादशीव्रतं सयातिविष्णुभवनंपुनरावृत्तिदुर्लभं इत्युक्त्वाकमलातस्मैप्रसन्नातस्यवंशजान् सोपिविप्रोधनीभूत्वापितुर्गेहंसमावि
शत् एवंयःकुरुतेराजन्कमलाव्रतमुत्तमं शृणुयाद्वासरेविष्णोःसर्वपापैःप्रमुच्यते इतिश्रीब्रह्मांडपुराणेपुरुषोत्तममासेकमलानामैका
दशीमाहात्म्यंसंपूर्णं अथकार्तिकशुक्लैकादश्यांप्रबोधविधिः हेमाद्रौब्राह्मे एकादश्यांतुशुक्लायांकार्तिकेमासिकेशवं प्रसुप्तंबोधये





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दान्तोश्रद्धाभक्तिसमन्वितः नृत्यैर्गीतैस्तथावेदैर्ऋग्यजुःसाममंगलैः वीणापणवशब्दैश्चपुराणश्रवणेनच वासुदेवकथाभिश्चस्तोत्रै
रन्यैश्चवैष्णवैः सुभाषितैर्नरेंद्रजालैर्भूरिशोभाभिरेवच पुष्पैर्धूपैश्चनैवेद्यैर्दीपमालासुशोभनैः होमैर्भक्ष्यैरपूपैश्चफलैःशर्करपायसैः
इक्षुविकारैर्मधुरैर्द्राक्षाद्यैःसहदाडिमैः कुरंटकस्यमंजर्यामालत्याकमलेनच कुरंटकःपर्णशरःकृष्णातुलसीतिकेचित् लताभ्यांश्वेतरक्ता
भ्यांचंदनाभ्यांचसर्वदा कुंकुमारक्तकाभ्यांचरक्तसूत्रैःसकंकणैः तथानानाविधैःपुष्पैर्दिव्यैर्वीरक्रियाहृतैः क्रयमाणःक्रयोवीरःक्रयवि-
हितंमूल्यंदत्वा तस्यांरात्र्यांव्यतीतायांद्वादश्यामरुणोदये आदौघृतेनैक्षवेणमधुनास्नापयेत्ततः दध्नाक्षीरेणचतथापंचगव्येनपूजयेत्
उद्वर्तयेन्माषचूर्णशर्करामलकीतथा सर्षपांश्चप्रियंगूंश्चमातुलिंगरसैस्तथा सर्वौषधीःसर्वगंधान्सर्वबीजानिकांचनं मंगलानियथा
कामंरत्नानिचकुशोदकं एवंसंशोध्यदेवेशंदद्याद्गोरोचनंशुभं ततस्तुकलशान्स्थाप्ययथाप्राप्तांस्त्वलंकृतान् जातीपल्लवसंयुक्तान्सु
फलांश्चसकांचनान् पुण्याहवेदशब्देनवीणावेणुरवेणच एवंसंस्नाप्यगोविंदंस्वनुलिप्तंस्वलंकृतं सुवाससंतुसंपूज्यसुमनोभिःसकुंकु
मैः धूपैर्दीपैर्मनोज्ञैश्चपायसेनचभूरिणा हविष्येश्चान्नदानैश्चहोमैःपुष्पैःसदक्षिणैः वासोभिर्भूषणैरन्यैर्गोभिरश्वैर्मनोजवैः ब्रा
ह्मणाःपूजनीयाश्चविष्णोरीड्याश्चमूर्तयः यस्तुशिष्टामृतंपश्चाद्भोक्तव्यंब्राह्मणैःसह इतिउद्यापनउत्सवविधिः अथकार्तिकशु
क्लैकादश्यांभीष्मपंचकव्रतं हेमाद्रौनारदीये नारदउवाच यदेतदचलंपुण्यंव्रतानामुत्तमव्रतं कर्तव्यंकार्तिकेमासिप्रयत्नाद्भीष्मपंच

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ग्र·रा·
१७९

कं विज्ञानंतस्यविस्पष्टंफलंचापितत्तोवरं कथयस्वप्रसादेनमुनीनांहितकाम्यया ब्रह्मोवाच प्रवक्ष्यामिमहापुण्यंव्रतंव्रतविदांवर
भीष्मेणैवनसंप्राप्तंव्रतंपंचदिनात्मकं सकाशाद्वासुदेवस्यतेनोक्तंभीष्मपंचकं व्रतस्यास्यगुणान्वक्तुंकः शक्तः केशवादृते व्रतंचैतन्महा
पुण्यंमहापातकनाशनं अतोवरप्रयत्नेनकर्तव्यंभीष्मपंचकं वालखिल्याऊचुः कार्तिकस्यासितेपक्षे स्नात्वासम्यग्यतव्रतः एकादश्यां
तुगृह्णीयाद्व्रतंपंचदिनात्मकं शरपंजरसुप्तेनभीष्मेणतुमहात्मना राजधर्मादानधर्मामोक्षधर्मास्ततःपरं कथिताःपांडुदायादैः कृष्णो
नापिश्रुतास्तदा ततःप्रीतेनमनसावासुदेवेनभाषितं धन्यधन्योसिभीष्मत्वंधर्माःसंश्रावितास्त्वया एकादश्यांकार्तिकस्ययाचितंन्वज
लंत्वया अर्जुनेनसमानीतंगांगंबाणस्यवेगतः तुष्टानितवगात्राणितस्मादद्यदिनावधि पूर्णांतेसर्वलोकास्त्वांतर्पयंत्वर्घ्यदानतः तस्मा-
त्सर्वप्रयत्नेनममसंतुष्टिकारकं एतद्व्रतंप्रकुर्वंतुभीष्मपंचकसंज्ञितं कार्तिकस्यव्रतंकृत्वानकुर्याद्भीष्मपंचकं समग्रंकार्तिकव्रतंतस्यात
स्यभविष्यति अशक्तश्चेन्नरोभूयादसमर्थश्चकार्तिके भीष्मस्यपंचकंकृत्वाकार्तिकस्यफलंलभेत् सत्यव्रतायशुचयेगांगेयायम
हात्मने भीष्मायतद्ददाम्यर्घ्यमाजन्मब्रह्मचारिणे सव्येनानेनमंत्रेणतर्पणंसार्वकर्णिकं व्रतांगत्वात्पूर्णिमायांप्रदेयःपापपूरुषः
अपुत्रेणप्रकर्तव्यंसर्वथाभीष्मपंचकं यःपुत्रार्थंव्रतंकुर्यात्सस्त्रीकोभीष्मपंचकं प्रदत्वापापपुरुषंवर्षमध्येसुतंलभेत् अवश्यमे
वकर्तव्यंतस्माद्भीष्मस्यपंचकं विष्णुप्रीतिकरंप्रोक्तंमयाभीष्मस्यपंचकं अत्रैवहिप्रकर्तव्यःप्रबोधस्तुहरेःखग हतःशंखासुरोदे-

ए·
११

१७९

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्योनभसः शुक्लपक्षके एकादश्यांततोविष्णुश्चातुर्मास्येप्रसुप्तवान् क्षीरोदधौ जाग्रतोसावेकादश्यांतुकार्तिके अतःप्रबोधनंकार्यमेकादश्यां
तुवैष्णवैः उत्तिष्ठोत्तिष्ठशंखघ्नउत्तिष्ठांभोधिचारक उत्तिष्ठमुनिनौधारत्रैलोक्येमंगलंकुरु उत्तिष्ठधरणीधारवराहादिकधारक कूर्मरूपधरो
त्तिष्ठत्रैलोक्येमंगलंकुरु उत्तिष्ठोत्तिष्ठवाराहदंष्ट्रोद्धृतवसुंधर हिरण्याक्षप्राणघातिन्त्रैलोक्येमंगलंकुरु हिरण्यकशिपुघ्नत्वंप्रल्हादानंददा
यक लक्ष्मीपतेसमुत्तिष्ठत्रैलोक्येमंगलंकुरु उत्तिष्ठबलिदर्पघ्नदेवेंद्रपददायक उत्तिष्ठादितिपुत्रत्वंत्रैलोक्येमंगलंकुरु उत्तिष्ठहैहयाधीशस
मस्तकुलनाशन रेणुकाघ्नत्वमुत्तिष्ठत्रै॰ उत्तिष्ठरक्षोदलनअयोध्यास्वर्गदायक समुद्रसेतुकर्तुस्त्वंत्रैलोक्येमंगलंकुरु उत्तिष्ठकंसाहरणमद
घूर्णितलोचन उत्तिष्ठहलपाणेत्वंत्रैलोक्येमंगलंकुरु उत्तिष्ठत्वंगयावासिंस्त्यक्तलौकिकवृत्तक उत्तिष्ठपद्मासनगत्रै॰ उत्तिष्ठम्लेच्छनिवह
खड्गसंहारकारक अश्ववाहयुगांतेत्वंत्रै॰ उत्तिष्ठोत्तिष्ठगोविंदउत्तिष्ठगरुडध्वज उत्तिष्ठकमलाकांतत्रैलोक्येमंगलंकुरु इत्युक्त्वाशंखभे
र्यादिप्रातःकालेतुवादयेत् वीणावेणुमृदंगादिगीतनृत्यादिकारयेत् उत्थापयित्वादेवेशंपूजांतस्यविधायच सायंकालेप्रकर्तव्यस्तुल
स्युद्वाहजोविधिः अवश्यमेवकर्तव्यःप्रतिवर्षेतुवैष्णवैः विधिंतस्यप्रवक्ष्यामियथासांगाक्रियाभवेत् विष्णोस्तुप्रतिमांकुर्यात्पलस्य
स्वर्णजांशुभां तदर्धार्धेनदर्धार्धेयथाशक्त्याप्रकल्पयेत् प्राणप्रतिष्ठांकृत्वाचतुलसीविष्णुरूपयोः नेनउत्थापयेद्देवंपूर्वोक्तैश्चस्तवादि
भिः उपचारैःषोडशभिःपुरुषसूक्तेनपूजयेत् देशकालौततःस्मृत्वागणेशंतत्रपूजयेत् पुण्याहंवाचयित्वाथनांदीश्राद्धंसमाचरेत् वेद-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वाद्यादिनिर्घोषैर्विष्णुमूर्तिंसमानयेत् तुलस्यानिकटेसातुस्थाप्याचांतरितापटैः आगच्छभगवन्देवअर्चयिष्यामिकेशव तुभ्यंददामि
तुलसींसर्वकामप्रदोभव दद्यात्त्रिवारमर्घ्यंचपाद्यंविष्टरमेवच ततश्चाचमनीयंचत्रिरुत्कान्नप्रदापयेत् ततोदधिघृतंक्षौद्रंकांस्यपात्र
पुटीकृतं मधुपर्कंगृहाणत्वंवासुदेवनमोस्तुते ततोयेस्वकुलाचाराः कर्तव्याविष्णुतुष्टये हरिद्रालेपनाभ्यंगःकार्यंसर्वंविधायच गोधूलिस
मयेपूज्यौतुलसीकेशवौपुनः पृथक्पृथक्ततःकार्यौर्स्त्रुमुखंमंगलंपठेत् ईषद्दृष्टेभास्करेतुसंकल्पंतुसमर्पयेत् स्वगोत्रप्रवरानुक्त्वातां-
थात्रिपुरुषादिकं अनादिमध्यनिधनत्रैलोक्यप्रतिपालक इमांगृहाणतुलसींविवाहविधिनेश्वर पार्वतीबीजसंभूतांवृंदाभस्मनिसं
स्थितां अनादिमध्यनिधनांवल्लभांचददाम्यहं पयोघटैश्चसेवाभिः कन्यावद्वर्धितामया त्वत्प्रियांतुलसींतुभ्यंदास्यामित्वंगृहाणभो
एवंदत्वातुतुलसीपश्चात्तौपूजयेत्ततः रात्रौजागरणंकुर्याद्विवाहोत्सवपूर्वकं प्रतिवर्षमिदंकुर्यात्कार्तिकव्रतसिद्धये इतिसनत्कुमारसं-
हितायांकार्तिकशुक्लैकादश्यांद्वादश्यांवातुलसीविवाहविधिः वालखिल्याऊचुः ततःप्रभातसमयेतुलसींविष्णुमर्चयेत् वन्हिसं-
स्थापनंकृत्वाद्वादशाक्षरविद्यया पायसाज्यक्षौद्रतिलैर्हुनेदष्टोत्तरंशतं ततःस्विष्टकृतंहुत्वादद्यात्पूर्णाहुतिंततः आचार्यंचसमभ्यर्च्य
होमशेषंसमापयेत् चतुरोवार्षिकान्मासान्नियमंयस्ययत्कृतं कथयित्वाद्विजेभ्यस्तत्तथान्यत्परिपूजयेत् इदंव्रतंमयादेवकृतंप्रीत्यै
तवप्रभो न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दन रेवतीतुर्यचरणेद्वादशीसंयुतेनरः नकुर्यात्पारणंकुर्वन्व्रतंनिष्फलतांव्रजेत् ततोये-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

श्रंपदार्थानांवर्जनंतुकृतंभवेत् चातुर्मास्येथवाचोर्जेब्राह्मणेभ्यःसमर्पयेत् ततःसर्वैसमश्नीयात्यद्युक्तंव्रतेस्थितः दंपतीभ्यांस
हैवात्रभोक्तव्यंवाद्विजैःसह ततोभुक्त्युत्तरंयानिगलितानिदलानिच तुलस्यास्तानिभुक्त्वातुसर्वपापैःप्रमुच्यते भोजनानंतरंविष्णोरर्पितंतु
लसीदलं भक्षणात्सापनिर्मुक्तिश्चांद्रायणशताधिका इक्षुखंडंतथाधात्रीफलंपूगीफलंतथा भुक्त्वातुभोजनस्यांतेतयोच्छिष्टंविन
श्यति एषुत्रिषुनभुक्तंचेदेकैकमपियेनतु ज्ञेयउच्छिष्टआवर्षंनरोसौनात्रसंशयः ततःसायंपुनःपूज्योइक्षुवंशैश्चमंडितो तुलसीवा
सुदेवोचकृतकृत्योभवेत्ततः ततोविसर्जनंकुर्याद्दत्वादेयादिकंहरेः वैकुंठंगच्छभगवन्तुलस्याःसहितःप्रभो मत्कृतंपूजनंगृह्य संतुष्टोभव
सर्वदा गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर यत्रब्रह्मादयोदेवास्तत्रगच्छजनार्दन एवंविसर्ज्यदेवेशमाचार्यायप्रदापयेत् मूर्त्यादिकं
सर्वमेवकृतकृत्योभवेन्नरः प्रतिवर्षंकरोत्येवंतुलस्युद्वहनंशुभं इहलोकेपरत्रापिविपुलंसद्यशोलभेत् प्रतिवर्षंतुयःकुर्यात्तुलसीकरपी-
डनं भक्तिमान्धनधान्यैश्चयुक्तोभवतिनिश्चितं इतिश्रीसनत्कुमारसंहितायांकार्तिकशुक्लए०व्रतंसंपूर्णं अथमार्गशीर्षकृष्णैका-
दशीव्रतं अर्जुनउ० ॐनमोनारायणायाव्यक्तायात्मस्वरूपिणे सृष्टिस्थित्यंतकर्त्रेचकेशवायनमोस्तुते त्वमेवजगतांनाथअंतर्यामी-
त्वमेवच शास्त्राणांचकवीशश्चवक्तात्वंचजगत्पते एकादशीकथंस्वामिन्नुत्पन्नाइतिगीयते एतंहिसंशयंमेद्यछेत्तुमर्हसित्वंप्रभो ब्रू-
युःस्निग्धस्यशिष्यस्यगुरवोगुह्यमप्युत ममोपरिकृपांकृत्वाइदानींवक्तुमर्हसि मार्गशीर्षेकृष्णपक्षेकिन्नामैकादशीभवेत् किन्नो

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मकोविधिस्तस्याः कोदेवस्तत्रपूज्यते कृताकेनपुरादेवएतद्विस्तरतोवद श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिकथांपातकनाशिनीं पृष्टाच
यात्वयाराजन्लोकानांहितकाम्यया मार्गशीर्षेकृष्णपक्षेन्वोत्पन्तिर्नामनामतः तस्यामुपोषणेनैवधार्मिकोजायतेनरः धर्माद्भवतिसत्यं
वैलक्ष्मीःसत्यानुसारिणी पुरावैमुरनाशायउत्पन्नांममवल्लभां येकुर्वंतिनराराजन्तेषांसौरव्यंभवेद्ध्रुवं तथापापानिनश्यंतितेनयां
तियमालयं अर्जुनउवाच उत्पन्नासाकथंदेव कथंपुण्याधिकाशुभा कथंदेवपवित्रावैकथंचदेवताप्रिया श्रीकृष्णउवाच पुराकृतयु
गेपार्थमुरुनामेतिदानवः अत्यद्भुतोमहारौद्रः सर्वलोकभयंकरः इंद्रउच्छेदितस्तेन व्याधोदेवःपुरंदरः आदित्याश्चशिवोब्रह्मावायुरग्नि
स्तथैवच न वंप्रतिष्ठितंतेनएवमादिधनंजय देवतानिर्जितास्तेनअत्युग्रेणतुपांडव स्वर्गान्निराकृतादेवाविचरंतिमहीतले साशंकाभय
भीतास्तेगताः सर्वेमहेश्वरं इंद्रेणकथितंसर्वमीश्वरस्यापिचाग्रतः स्वर्गलोकंपरित्यज्यविचरंतिमहीतले मर्त्येषुसंस्थितादेवा नशोभं
तेमहेश्वर उपायंब्रूहिमेदेव अमराणांतुकागतिः शिवउवाच गच्छगच्छसुरश्रेष्ठ यत्रास्तिगरुडध्वजः शरणागतदीनार्तपरित्राणपरा
यणः ईश्वरस्यवचःश्रुत्वादेवराजोमहामतिः त्रिदशैःसहितःसर्वैर्गतस्तत्रधनंजय अप्सरोगणगंधर्वैः सिद्धविद्याधरोरगैः यत्रैव
सजगन्नाथः सुप्तोस्तिचजनार्दनः कृतांजलिपुटोभूत्वाइंद्रस्तोत्रमुदीरयत् ॐनमोदेवदेवेशदेवानामपिवंदित दैत्यारेपुंडरीकाक्ष
त्राहिमांमधुसूदन नमस्तेस्थितिनाशायनमस्तेस्तुजगत्पते नमोदैत्यविनाशायत्राहिमांमधुसूदन सुराः सर्वेसमायुक्ताभयभी-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ताः समागताः शरणंत्वांजगन्नाथत्राहिमांभयविह्वलं त्राहिमांदेवदेवेशत्राहिमांत्वंजनार्दन त्राहिमांत्वंसुरानंददानवानांविनाशक
त्वंगतिस्त्वंमतिर्देवत्वंकर्तात्वंपरायणः त्वंमातासर्वगोसित्वंत्वमेवहिजगत्पिता अत्कग्रेणतुदैत्येननिर्जितास्त्रिदशाःप्रभो स्वर्गंत्य-
क्त्वाजगन्नाथविचरंतिमहीतले इंद्रस्यवचनंश्रुत्वाविष्णुर्वचनमब्रवीत् विष्णुरुवाच कीदृशोवोभवच्छत्रुःकिंनामाकीदृशंबलं किं
स्थानंतत्रदुष्टस्यकिंवीर्यंकःपराक्रमः इंद्रउवाच बभूवपूर्वंदेवेशासुरोब्रह्मसमुद्भवः तालजंघेतिनाम्नाचअत्युग्रोतिमहाबलः त
स्यपुत्रोतिविख्यातोसुरनामेतिदानवः उत्कटश्चमहावीर्योब्रह्मलब्धवरोमहान् पुरींचंद्रवतीनामतत्रस्थानेवसत्यसौ निर्जितादेव-
ताःसर्वाःस्वर्गाच्चैवनिराकृताः इंद्रोन्यश्चकृतस्तेनअन्योदेवोहुताशनः चंद्रसूर्यौकृतौचान्योयमोवरुणएवच सर्वमात्मीकृतंतेनस
त्यंसत्यंजनार्दन तस्यतद्वचनंश्रुत्वाकोपाविष्टोजगत्पतिः हनिष्येदानवंदुष्टमित्याहभगवान्हरिः त्रिदशैःसहितस्तत्रगतश्चंद्रवतीं
पुरीं दृष्ट्वादेवान्सयुयुधेदानवोबलदर्पितः असंख्यातैश्चशस्त्रास्त्रैर्दिव्यप्रहरणायुधः हन्यमानास्तुतैर्देवाअसुरैश्चपुनःपुनः त्र-
स्तादेवा स्ततःसर्वेगताःसर्वादिशोदश हरिंनिरीक्ष्यतत्रस्थांतिष्ठतिष्ठाब्रवीद्वचः सतंनिरीक्ष्यप्रोवाचअसुरंमधुसूदनः रेदानवदुराचा
रममचाहुंनिरीक्ष्यच चक्रंनैवसमायातंसक्रोधोरक्तलोचनः ततस्तेसंमुखाःसर्वेविष्णुनादानवाहताः हतोबाणैःपुनर्दिव्यैर्बभूव
सोतिविह्वलः चक्रंमुक्तंतुकृष्णोनदैत्यसैन्येचपांडव तेनैवच्छिन्नशिरसोबहवोनिधनंगताः एकांगोदानवस्तत्रयुध्यमानोमुहुर्मुहुः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नष्टाः सर्वेसुरास्तेन निर्जितो मधुसूदनः निर्जितेन च दैत्येन बाहुयुद्धं च याचितं बाहुयुद्धं कृतं तेन दिव्यं वर्षसहस्रकं विष्णुश्चिंतां प्र-
पन्नश्च नष्टाः सर्वे दिवौकसः विष्णुः पराजितस्तेन गतो बदरिकाश्रमं गुहां सिंहवतीं नाम तत्र सुप्तो जनार्दनः दानवः पृष्ठतो लग्नः प्र
विष्टस्तां गुहां तमां प्रसुप्तं तत्र मां दृष्ट्वा दानवेन सुभाषितं हनिष्यामि न संदेहो असुराणां भयंकरः इत्येवमुक्ते वचने दैत्येनामित्र-
कर्षिणा निर्गता कन्यका चैका जनार्दनशरीरतः रूपेणातिसुरूपाढ्या दिव्यप्रहरणायुधा विष्णुतेजःसमुद्भूता महाबलपराक्र
मा मोहितो दानवस्तत्र मुरनामेति पांडव सा कन्या युयुधे तेन सर्वयुद्धविशारदा निहतो दानवस्तत्र तथा देवः प्रबुद्धवान् पतितं
दानवं दृष्ट्वा ततो विस्मयमागतः केनेत्थं निहतो रौद्रो मम शत्रुर्भयंकरः न देवो न च गंधर्वो न समोस्यास्ति भूतले एवं पार्थ तदा जातो वि
स्मितो मधुसूदनः अकस्मादेव सोवाच वाचा दिव्या शरीरिणी एकादश्युवाच मया च निहतो दुष्टो देवासुरभयंकरः जिता येन सुराः
सर्वे स्वर्गाच्चैव निराकृताः तस्यास्तद्वचनं श्रुत्वा विष्णुर्वचनमब्रवीत् विष्णुरुवाच उपकारस्त्वया भद्रे मम कारुण्यभावतः दानवो
निहतो दुष्टः सुराणां च भयंकरः सोहं विनिर्जितो येन कंसो येन निपातितः विष्णोस्तद्वचनं श्रुत्वा देवी वचनमब्रवीत् एकादश्य
स्म्यहं विष्णो सर्वशत्रुविनाशिनी मया च निहतो दैत्यः सुराणां त्रासकारकः इत्येतद्वचनं श्रुत्वा देवदेवो जनार्दनः प्रोहतुष्टोस्मि



भद्रे ते वरं वरय वांछितं निहते दानवेंद्रे च संतुष्टास्तत्र देवताः हृष्टपुष्टास्ततो गत्वा आनंदं च समागताः आनंदस्त्रिषु लोकेषु मुन

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

योमुदमागताः ब्रूहित्वंवचनंभद्रेयत्तेमनसिवर्तते ददामिवचनसंदेहः सुराणामपिदुर्लभं एकादश्युवाच यदितुष्टोसिमेदेवसत्यमु
क्तंजनार्दन यदिसत्यंजगन्नाथस्तिस्रोवाचोदद्स्वमे श्रीभगवानुवाच सत्यमेतन्मयाप्रोक्तमवश्यंतवसुव्रते तिस्रोवाचोमया-
दत्तास्तववाक्यंभवेदिति एकादश्युवाच त्रैलोक्येषुचदेवेशमन्वंतरयुगेष्वपि अहंचत्वत्प्रियानित्यंयथास्यात्कुरुमेवरं सर्वति
थिप्रधानाचसर्वविघ्नविनाशिनी सर्वपापापहंत्रीचआयुर्बलविवर्धनी येउपोष्यंतितेमर्त्यामहाभक्त्याजनार्दन सर्वसिद्धिर्भवे
त्तेषांयदितुष्टोसिमाधव श्रीकृष्णउवाच यत्त्वंवदसिकल्याणितत्सर्वंचभविष्यति धर्मार्थकाममोक्षंचयस्त्वामेवंकरिष्यति
ममभक्ताश्चयेलोकायेचभक्तास्तवापिच चतुर्युगेषुविख्यातास्त्रिषुलोकेषुवैपरं त्वांचभक्तामहंमन्येएकादशिव्रतेस्थिताः
मम्पूजांकरिष्यंतिएकादश्यांनसंशयः सर्वतीर्थ्युत्तमात्वंच मत्प्रसादाद्भविष्यसि एवमुक्तातत:सातुतत्रैवांतरधीयत पुराकैक
टकेदेशेकर्णीकनगरेषुच कर्णसेनेतिराजर्षिन्र्यवसत्तत्र्कद्धिमत्प्रजः ब्राह्मणैःक्षत्रियैर्वैश्यैः शूद्रैश्चैवानुमोदितः नदुर्भिक्षं
नदारिद्र्यंतस्मिन्राज्ञिस्थितेप्रभो अकालवृष्टिर्नाव्याधिर्नैवतस्करतापिच संतत्संपद्विहीनश्चकोपितत्रनविद्यते पुत्रदुःखंपि
ताक्कापिनपश्यंतिचकुत्रचित् एतादृशेमहाराजेप्रशासतिप्रजाःप्रभो धनहीनोद्विजःकोपिक्षुत्क्षामोविपद्गतः कुटुंबभरणास-
क्तःकृच्छ्रांतमनुवर्तते भर्तुःशुश्रूषणेसक्तासदाचारगृहेस्थिता सुदामानामविप्रर्षिर्भार्यासाध्वीचसत्तमा रहःपृच्छतिभर्तारंम्ला

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नत्वावदनेनसा स्वामिन्यापेकृतेपूर्वंधर्महीनस्तुजायते धर्महीनेधनंनास्तिधर्महीनेक्रियानहि तस्मात्केनाप्युपायेनधर्मस्यजननंकुरु एत
स्मिन्नंतरेराजन्देवर्षिःसमुपागतः दंपतीचोत्थितौतत्रमधुपर्कंगृहाणभो आसनेतिष्ठभोस्वामिन्अर्घ्यंगृण्हनमोस्तुते अद्यमेसफलं
जन्मअद्यमेसफलाःक्रियाः अद्यमेसफलंसर्वंभवतोदर्शनेनच अस्मिन्पुरेतुयेस्वामिन्सर्वेतेस्फारिवनोजनाः अहंतुधनहीनत्वान्महा
दुःखेनपीडितः कथयस्वप्रसादेनधनाढ्यस्यामहंकथं धनहीनस्यलोकेस्मिन्वृथाजन्ममनोरथाः एवंश्रुत्वातुराजेंद्रवचनंनारदोब्रवी
त् नारदउवाच मार्गशीर्षेसितेपक्षेउत्पत्तिर्नामनामतः तस्यामुपोषणेनैवधनाढ्योजायतेध्रुवं तथापापानिनश्यंतिएतत्सत्यंवदामि
ते सर्वसौख्यकरंनृणांहरिवासरमुत्तमं गतेतुनारदेपश्चाद्व्रतंकृत्वाप्रयत्नतः तस्याव्रतप्रभावेनस्तुप्रसन्नोजनार्दनः स्वयमेवाश्रि
तालक्ष्मीर्यत्रासीद्द्विजमंदिरं भोगान्सुविपुलान्भुक्त्वागतोवैकुंठसन्निधौ एतस्मात्कारणाद्राजन्कर्तव्यंहरिवासरं अंतरंनैवकर्त
व्यंप्रशस्तव्रतकारिभिः तिथिरेकाभवेत्सर्वापक्षयोरुभयोरपि उदयेकादशीस्वल्पाअंतरेचत्रयोदशी मध्येचद्वादशीपूर्णात्रिः
स्पृहासाहरिप्रिया एकाउपोषितांचैवसहस्रेकादशीफलं सहस्रगुणितंदानंएकादश्यांतुपारणे अष्टम्येकादशीषष्ठीतृतीयाचचतु
र्दशी पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुता एकामुपोषयेत्तांतुद्वादशींविष्णुवल्लभां दशमीवेधसंयुक्ताहंतिपुण्यंपुराकृतं एकाद-
शीअहोरात्रंप्रभातेघटिकाभवेत् सातिथिःपरिहर्तव्याउपोष्याद्वादशीयुता एवंविधामयाप्रोक्तापक्षयोरुभयोरपि एकादश्यांप्रकुर्वी-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तउपवासंनसंशयः सयातिपरमंस्थानंयत्रास्तेगरुडध्वजः धन्यास्तेमानवालोकेविष्णुभक्तिपरायणाः एकादश्याश्चमाहात्म्यंप-
र्वकालेतुयःपठेत् गोसहस्रफलंतस्यपुण्यंभवतिभारत दिवावायदिवारात्रौयःशृणोतीहभक्तितः कुलकोटिसमायुक्तोविलोकेव
सेद्ध्रुवं एकादश्याश्चमाहात्म्यंपठ्यमानंशृणोतियः ब्रह्महत्यादिपापानिनश्यंतेनात्रसंशयः एकादशीसमानास्तिसर्वपातकना
शिनी इतिश्रीभविष्योत्तरपुराणेमार्गशीर्षकृष्णैकादशीउत्पत्तिर्नाममाहात्म्यंसंपूर्णं अथमार्गशीर्षकृष्णैकादश्यांवैतरणीव्रतं
हेमाद्रौभविष्ये कृष्णउवाच शरतल्पगतंभीष्मंपर्यपृच्छद्युधिष्ठिरः व्रतेनयेनपुण्येनयमलोकोनदृश्यते नारीवापुरुषोवापिय-
मलोकंनपश्यति तत्समाचक्ष्वधर्मज्ञपितामहकृपांकुरु भीष्मउवाच एकादशीवैतरणीनाकृतायनविमुच्यते यमलोकंनपश्येच्च
शोकंचैवनविंदति युधिष्ठिरउवाच केनतातविधानेनकर्तव्यासामहाफला पितामहसमाख्याहितद्विधानंममप्रभो भीष्मउवाच
एकादशीतिथिंकृत्वामार्गशीर्षेगतांशुभां तामसाद्यनरःसम्यक्गृण्हीयान्नियमंशुचिः एकादशीतिथिःकृष्णानाम्नावैतरणीशु
भा साव्रतेनत्वयाकार्यावर्षंनक्तोपवासिना मध्यान्हेतुनरःस्नात्वानित्यानिर्वर्त्यसत्क्रियाः रात्रौस्करभिमानीयकृष्णामनेर्यथावि
धि सापूर्वाभिमुखीकार्याकृष्णागौःकिलभूतले अग्रपादात्समारभ्यपश्चात्पादद्वयावधि गोपुच्छंतुसमासाद्यकुर्याद्वापितृतर्पणं ततः
पूजाप्रकर्तव्याशास्त्रदृष्टविधानतः गंधैर्वंश्रद्धयायुक्तश्चंदनेनानुलेपितां गंधतोयेनचरणौशृंगेप्रक्षाल्यशक्तितः ततोनुपूजयद्भक्त्या

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुष्पैर्गंधादिवासितैः मंत्रैःपुराणसंप्रोक्तैर्यथास्थानंयथाविधि ततोगोरग्रपादाभ्यांगोरास्यायनमोस्तुते गोश्रृंगाभ्यांचसंपूज्यगोस्कं-
धाभ्यांतथैवच गोःपुच्छायनमस्तेस्तुगोःपुच्छात्पादयोस्तथा गोःसर्वांगेषुसंपूज्यस्थानेस्थानेषुदेवताः स्थानेषुतेषुगंधां-
श्चप्रक्षिपेच्छुद्धमानसः पश्चात्प्रदापयेद्धूपंगोदीपःप्रतिगृह्यतां असिपत्रादिकंघोरंनदीवैतरणींतथा प्रसादात्तेतरिष्या-
मिगोर्मातस्तेनमोस्तुते यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी विश्वरूपधरोदेवःप्रीयतामनयागवा स्रुवेनतीर्यतेय-
स्मान्नदीवैतरणीध्रुवं तस्मादेकादशीकृत्वानाम्नावैतरणीनरः हेमश्रृंगींरौप्यखुरींसघंटाभरणांबरां तांम्रपृष्ठींकांस्यदो-
ग्ध्रींस्वर्णोत्तरदक्षिणां सवत्सांद्विजमुख्यायसंपूजयित्वासमर्पयेत् आनंदकृत्सर्वलोकेदेवानांचसदाप्रिया गोस्त्वंपाहिजग-
न्नाथदीपोयंप्रतिगृह्यतां आच्छादनंगवेदद्यात्सम्यक्शुद्धंसुनिर्मलं स्रुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी मार्गशीर्षादिकेभ-
क्त्यावर्षमेकंतुपूजयेत् मासिमासिप्रकुर्वीतमासद्वादशकव्रतं उद्यापनंततःकुर्यात्पूर्णेसंवत्सरेतदा युधिष्ठिरउवाच मार्गशीर्ष-
सितेपक्षेउद्यापनविधिंवद कृष्णउवाच यइच्छेत्सुफलंजन्मजीवितंचसुजीवितं विनाशंसर्वपापानांसकुर्याद्द्वादशीमिमां
युधिष्ठिरकिमिष्टेनशिष्टैरन्यैरनुष्ठितैः दुष्टानीवरदुर्गाणितोषयस्वचकेशवं मार्गशीर्षेसितेपक्षेद्वादश्यांकारयेदिदं यदावाभ-
क्तिरत्यन्तादेवदेवंजनार्दनं एकादश्यान्निराहारोमासिमास्यर्चयेद्धरिं द्वादश्यांद्वादशैनानिनामानिपरिकीर्तयेत् केशवंमार्ग-





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शीर्षेत्वपौषेनारायणंविदुः माधवंमाघमासेतुगोविंदमथफाल्गुने चैत्रेविष्णुंतथाविंद्याद्वैशाखेमधुसूदनं त्रिविक्रमंतथाज्येष्ठेआ
षाढेवामनंविदुः श्रावणेश्रीधरंविद्धिहृषीकेशंतुभाद्रके आश्विनेपद्मनाभंचऊर्जेदामोदरंविदुः कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजना
र्दनः उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् एतानिप्रातरुत्थाययःपठेत्पुरुषःसदा अ
पिदुर्गतिकास्तस्यपितरःस्वर्गमाप्नुयुः तिलपात्रंद्वादशकंयोदद्यात्प्रत्यहंद्विजे एवंद्वादशभिर्मासैर्व्रतंपारगमिष्यति व्रतांतेब्राह्मणा
नुशातान्माससंख्यान्निमंत्रयेत् द्वादशाश्वत्थपत्रेषुस्थापयेच्छुक्लतंडुलैः ॐतस्मैनमआयातुइतिआवाहयेत्पृथक् संस्थाप्या
ग्नितंतःप्राच्यांध्यायेद्यआत्मसंस्तुरवान् आसनंपाद्यमर्घ्यंचगंधपुष्पादिनातथा धूपदीपांश्चवासांसिहोमशेषंसमापयेत् दत्वान्ना
चमनंपश्चाद्धोमशेषंनिवेदयेत् अष्टाष्टसमिधोहोमेहुत्वाष्टाष्टघृताहुतीः यवस्याहुतिमेकैकामष्टाष्टौचतिलाहुतीः अग्निप्रतिष्ठितंहो
मंदेवेभ्यश्चनिवेदयेत् पूर्णाहुतौभवेन्मंत्रस्तद्विष्णोःपरमंपदं एवंकृतेतुहोमांतेगाःकृष्णाद्वादशस्त्वा षड्वातस्मोपिवादेयाएकावापि
पयस्विनी शय्यासतूलिकाकार्यादंपत्योःपरिधानकं सवत्साकृष्णवर्णातुधेनुर्देयापयस्विनी सौवर्णीस्फुरेरभिंकृत्वास्थापयेत्तूलिको
परि स्फुरभिंपूजयेन्मंत्रैःपूर्वोक्तैर्भक्तिसंयुतः ततस्तुगुरवेदद्यात्सर्वंतत्रक्षमापयेत् कृष्णभक्तायशांतायविधिज्ञात्रेमहात्मने तेन
प्रीयतामितिप्रोक्तादेवाद्वादशमासिकान् मामेवसुद्धरस्वेतिगवांवाच्यःपरिग्रहः मासिमासिभवेत्तेषुतिलपात्रेषुतेघटैः तस्मिन्का

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लेभ्रदातव्याघटास्तेमासनामभिः समाप्यतुव्रतंपुण्यंतस्मादर्घ्यंप्रदापयेत् उद्धारयेत्पितृगणान्दशपूर्वान्दशापरान् आत्मानमेकविंशञ्च कृष्णैकादश्युपोषणात् भारोलोहस्यदातव्यः कार्पासोद्रोणसंयुतः वैतरिण्यांसमाप्त्यर्थंब्राह्मणायकुटुंबिने नारीवापुरुषोवापिव्र तस्यास्यप्रभावतः राज्यंबहुदिनंभुक्त्वास्वर्गलोकेमहीयते इतिश्रीभविष्योत्तरपुराणेमार्गशीर्षकृष्णैकादश्यांवैतरणीव्रतोद्या पनंसंपूर्णं इतिएकादशीव्रतानिसमाप्तानि श्रीकृष्णार्पणमस्तु श्रीसांबसदाशिवप्रसन्नोस्तु श्रीसीताकांतार्पण॰





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

श्रीगणेशायनमः अथकथा सूतउवाच एवंप्रीत्यापुराविप्राः श्रीकृष्णेनपरंव्रतं कथितंतत्प्रयत्नेनयः कुर्याद्भुविमानवः १ भुक्त्वाभो
गाननेकांस्तुविष्णुलोकंप्रयातिसः पार्थउवाच उपवासस्यनक्तस्यतथैवायाचितस्यभो २ किंपुण्यंकिंविधानंहिब्रूहिसर्वंजनार्दन श्रीकृष्ण
उवाच हेमंतेचैवसंप्राप्तेमासिमार्गशिरेशुभे ३ शुक्लपक्षेतथापार्थएकादश्यामुपोष्यच दशम्यांनैवयत्किंचित्प्रकुर्यात्सदृढव्रतं ४ नक्तंचत
द्दिनेकृत्वादशम्यांदंतधावनं दिवसस्याष्टमेभागेमंदीभूतेदिवाकरे तन्ननक्तंविजानीयान्नक्तंनिशिभोजनं ५ ततःप्रभातसमयेसंकल्प्य-
नियमांश्चरेत् मध्यान्हेचतथापार्थशुचिःस्नातःसमाहितः ६ नद्यांतडागेवाप्यांवाद्युत्तमंमध्यमंत्वधः कूमाद्ज्ञेयंतथाकूपेतदभावे
प्रशस्यते ७ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे मृत्तिकेहरमेपापंयन्मयापूर्वसंचितं ८ त्वयाहतेनपापेनगच्छामिपरमांगतिं
अनेनमृत्तिकास्नानंविदध्यात्तुव्रतीनरः ९ नालपेत्पतितैश्चौरैस्तथापाखंडिभिःसह मिथ्यापवादिनोदेववेदब्राह्मणनिंदकान् १० अन्यांश्चै
वदुराचारानगम्यागामिनस्तथा परद्रव्यापहर्तृंश्चदेवद्रव्यापहारिणः ११ नसंभाषेतदृष्ट्वापिभास्करंचावलोकयेत् ततोगोविंदमभ्यर्च्य
नैवेद्यादिभिरादरात् १२ दीपंदद्याद्गृहेचैवभक्तियुक्तेनचेतसा तद्दिनेवर्जयेत्पार्थनिंदांमैथुनमेवच १३ गीतशास्त्रविनोदेनदिवारात्रीनयद्व
ती रात्रौजागरणंकृत्वाभक्तियुक्तेनचेतसा १४ विप्रेभ्योदक्षिणांदत्वाप्रणिपत्यक्षमापयेत् यथाशुक्लातथाकृष्णामान्यावैधर्मतत्परैः
१५ एकादश्योर्द्वयोराजन्विभेदंनैवकारयेत् एवंहिकुरुतेयस्तुशृणुतस्यापितत्फलं १६ शंखोद्धारेनरःस्नात्वादृष्ट्वादेवंगदाधर एकाद-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

श्युपवासस्यकलांनार्हतिषोडशीं १७ व्यतीपातेचदानस्यलक्षमेकंफलंस्मृतं संक्रांतिषुचतुर्लक्षंयोददातिधनंजय १८ कुरुक्षेत्रेचयत्पुण्यं
ग्रहणेचंद्रसूर्ययोः तत्सर्वंलभतेयस्तुत्वेकादश्यामुपोषतः १९ अश्वमेधस्ययज्ञस्यकरणाद्यत्फलंलभेत् ततःशतगुणंपुण्यमेकाद
श्युपवासतः २० तपस्विनोगृहेनित्यंलक्षंयस्यचभुंजते षष्टिवर्षसहस्राणितस्यपुण्यंचयद्भवेत् २१ एकादश्युपवासेनफलंप्राप्नोति
मानवः गोसहस्रेचयत्पुण्यंदत्तेवेदांगपारगे २२ तस्मात्पुण्यंदशगुणमेकादश्युपवासिनां नित्यंचभुंजतेयस्यदशचैवद्विजोत्तमाः २३
भवेत्तद्दशगुणंभोजनेब्रह्मचारिणः एतत्सहस्रंभूदानेकन्यादानेतुतत्स्मृतं २४ तस्माद्दशगुणंप्रोक्तंविद्यादानेतथैवच विद्याद्दशगुणं
चान्नंयोददातिबुभुक्षिते २५ अन्नदानसमंदानंनभूतंनभविष्यति तृप्तिमायांतिकौंतेयस्वर्गस्थाःपितृदेवताः २६ एकादश्याव्रतस्यापिपुण्य
संख्यानविद्यते एतत्पुण्यप्रभावंचयत्सुरैरपिदुर्लभं २७ नक्तस्यार्धफलंतस्य एकभक्तस्यसत्तम एकभक्तंचनक्तंचउपवासस्तथैवच २८ एतेषा-
न्यतमंवापिव्रतंकुर्याद्धरेर्दिने तावद्गर्जंतितीर्थानिदानानिनियमायमाः २९ एकादशीनसंप्राप्तायावत्तावन्मखाअपि तस्मादेकादशीसर्वैरुपो-
ष्याभवभीरुभिः ३० ननरवेनपिबेत्तोयंनहन्यान्मत्स्यसूकरान् एकादश्यांन्नभुंजीतयन्मांत्वंपृच्छसेर्जुन ३१ एतत्तेकथितंसर्वंव्रतानामुत्त
मंव्रतं एकादशीसमंनास्तिकृत्वायज्ञसहस्रकं ३२ अर्जुनउवाच उक्तात्वयाकथंदेवपुण्येयंसर्वतस्तिथिः सर्वेभ्योपिपवित्रेयमुक्ताद्ये
कादशीतिथिः ३३ श्रीकृष्णउवाच पुराकृतयुगेपार्थमरुनामाहिदानवः अत्यद्भुतोमहारौद्रःसर्वदेवभयंकरः ३४ इंद्रोविनिर्जितस्तेन-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अत्युग्रेणच पांडव इंद्रेणकथितःसर्वहन्तांनःशंकरायवै ३५ सर्वलोकपरिभ्रष्टाविचरामोमहीतले उपायंब्रूहिमेदेवअमराणांतुकागतिः
३६ ईश्वरउवाच देवराजसुरश्रेष्ठयत्रास्तिगरुडध्वजः शरण्यश्चजगन्नाथःपरित्राणपरायणः ३७ तत्रगच्छामहेसर्वेसनःकार्यंविधा
स्यति ईशस्यवचनंश्रुत्वादेवराजोमहामनाः ३८ पुरस्कृत्यमहादेवंसगणंसमरुद्गणं यत्रदेवोजगन्नाथःप्रसुप्तोहिजनार्दनः ३९ जलमध्येप्र-
सुप्तंतुदृष्ट्वादेवंजगत्पतिं कृतांजलिपुटोभूत्वारुद्रस्तोत्रमुदीरयत् ४० ॐनमोदेवदेवायदेवदेवैःसुवंदित दैत्यारेपुंडरीकाक्षत्राहिनोमधुसूद
न ४१ दैत्यभीताइमेदेवामयासहसमागताः शरणंत्वांजगन्नाथत्वंकर्तात्वंचकारकः ४२ त्वंमातासर्वलोकानांत्वमेवजगतःपिता त्वंस्थितिस्त्वं
तथोत्पत्तिस्त्वंचसंहारकारकः ४३ सहायस्त्वंचदेवानांत्वंचशांतिकरःप्रभो त्वंधरानलमाकाशःसर्वविश्वोपकारकः ४४ भवस्त्वंचस्वयंब्रह्मा
त्रैलोक्यप्रतिपालकः त्वंरविस्त्वंशशांकश्चत्वंचदेवोहुताशनः ४५ हव्यंहोमोहुतस्त्वंचमंत्रतंत्रार्त्विजोजपः यजमानश्चयज्ञस्त्वंफलभोक्ता
त्वमीश्वरः ४६ नत्वयारहितंकिंचित्त्रैलोक्येसचराचरे भगवन्देवदेवेशशरणागतवत्सल ४७ त्राहित्राहिमहायोगिन्भीतानांशरणंभव दा
नवैर्निर्जितादेवाःस्वर्गभ्रष्टाःकृताविभो ४८ स्थानभ्रष्टाजगन्नाथविचरंतिमहीतले रुद्रस्यवचनंश्रुत्वाविष्णुर्वचनमब्रवीत् ४९ श्रीभगवानुवाच कोसौ
दैत्योमहामायोदेवायेनविनिर्जिताः किंस्थानंतस्यकिंनामकिंबलंकस्तदाश्रयः ५० एतत्सर्वंसमाचक्ष्वमघवन्निर्भयोभव इंद्रउवाच भगवन्
देवदेवेशभक्तानुग्रहकारक दैत्यःपूर्वमहानासीन्नाडीजंघइतिस्मृतः ब्रह्मवंशसमुद्भूतोमहोग्रःसुरसूदनः ५२ तस्यपुत्रोतिविख्या

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तोमरुर्नामामहासुरः तस्यचंद्रवतीनामनगरीत्वगरीयसि ५३ तस्यांवसन्सदुष्टात्माविश्वंनिर्जित्यवीर्यवान् सुरान्स्ववशमानिन्येनिराकृ
त्यत्रिविष्टपात् ५४ इंद्राग्नियमवाय्वीशसोमनिर्ऋतिपाशिनां पदेषुस्वयमेवासीत्सूर्योभूत्वातपत्यपि ५५ पर्जन्यःस्वयमेवासीदेवसर्वाश्च
देवताः जहितंदानवंविष्णोसुराणांजयमावह ५६ तस्यतद्वचनंश्रुत्वाकोपाविष्टोजनार्दनः उवाचशक्रंदेवेंद्रहनिष्येतंमहाबलं ५७ प्रयांतुसहि
ताःसर्वेचंद्रवत्यांमहाबलाः इत्युक्तामययुःसर्वेपुरस्कृत्यहरिंसुराः ५८ दृष्टोदेवैस्तुदैत्येंद्रोगर्जमानस्तुदानवैः असंख्यातसहस्रैस्तुदिव्यप्र
हरणायुधैः ५९ हन्यमानास्तदादेवाअसुरैर्बाहुशालिभिः संग्रामंतेसमुत्सृज्यपलायंतेदिशोदश ६० ततोदृष्ट्वाहृषीकेशंसंग्रामेसमुपस्थितं
अन्वधावन्नभिक्रुद्धाविविधायुधपाणयः ६१ अथतान्प्रहुतान्दृष्ट्वाशंखचक्रगदाधरः विव्याधसर्वगात्रेषुशरैराशीविषोपमैः ६२ तेनाहतास्तेश
तशोदानवानिधनंगताः एकाकीदानवःस्थित्वायुयुध्यमानोमुहुर्मुहुः ६३ तस्योपरिहृषीकेशोयद्यदायुधमुत्सृजत् पुष्पवत्तंसमभ्येतिकुंठितंतस्यते
जसा ६४ शस्त्रास्त्रैर्विध्यमानोपियदाजेतुंनशक्यते युयोधचतदाक्रुद्धोबाहुभिःपरिघोपमैः ६५ बाहुयुद्धंकृतंतेनदिव्यवर्षसहस्रकं तेनःश्रांतःस
भगवान्गतोबदरिकाश्रमं ६६ तत्रहैमवतीनाम्नीगुहापरमशोभना तांप्रविश्यमहायोगीशयनार्थंजगत्पतिः ६७ योजनद्वादशायामाए
कद्वाराधनंजय अहंतत्रप्रसुप्तोस्मिभयभीतोनसंशयः ६८ महायुद्धेनतेनैवश्रांतोहंपांडुनंदन दानवःपृष्ठतोलग्नःप्रविवेशसतांगुहां ६९
प्रसुप्तंमांतदादृष्ट्वाचिंतयद्दानवोहृदि हस्मिन्नेनंहनिष्येहंदानवानांक्षयावहं ७० एवंसदुर्मतेस्तस्यव्यवसायंव्यवस्यच समुद्भूतामममांगे-

GC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भ्यःकन्यैकाचमहाप्रभा ७१ दिव्यप्रहरणादेवीयुद्धायसमुपस्थिता ईक्षितादानवेंद्रेणमरुणापांडुनंदन ७२ युद्धंसमाहितंतेनस्त्रियातत्रप्र-
यान्विते तेनायुध्यतसानित्यंतांदृष्ट्वाविस्मयंगतः ७३ केनेयंनिरू तारौद्राअत्युग्राशनिपातिनी इत्युक्त्वादानवेंद्रोसौयुयुधेकन्ययातया ७४ त
तस्तयामहादेव्यात्वरयादानवोबली छित्वासर्वाणिशस्त्राणिक्षणेनविरथःकृतः ७५ बाहुप्रहरणोपेतोधावमानोमहाबलात् तलेनाहत्यहृदये
तयादेव्यानिपातितः ७६ पुनरुत्थायसोधावत्कन्याहननकांक्षया दानवपुनरायांतंरोषेणाहत्यतच्छिरः ७७ क्षणान्निपातयामासभूमौतच्चस
मुज्ज्वलत् दैत्यःकृत्तशिराःसोथययौवैवस्वतालयं ७८ शेषाभयार्दितादीनाःपातालंविविशुर्द्विषः कृतःसमुत्थितोदेवःपुरोदृष्ट्वासुरंहतं ७९
कन्यांपुरस्थितांत्वापिकृतांजलिपुटांनतां विस्मयोत्फुल्लनयनःप्रोवाचजगतांपतिः ८० केनायंनिहतःसंख्येदानवोदुष्टमानसः येनदेवाःसगंध
र्वाःसेंद्राश्चसमरुद्गणाः ८१ सनागाःसहलोकेशालीलयैवविनिर्जिताः येनाहंनिर्जितोभूत्वाभीतःसुप्तोगुहामिमां ८२ केनकारुण्यभावे
नरक्षितोहंपलायितः कन्योवाच मयाविनिहतोदैत्यस्त्वदंशोद्भूतयाप्रभो ८३ दृष्ट्वासुप्तंसंहरेत्वांतुयतोहंतुंसमुद्यतः त्रैलोक्यकंटक-
स्येत्थंव्यवसायंप्रबुध्यच ८४ हतोमयादुरात्मासौदेवतानिर्भयाःकृताः तवैवाहंमयाशक्तिःसर्वशत्रुभयंकरी ८५ त्रैलोक्यरक्षणार्थाय
हतोलोकभयंकरः निहतंदानवंदृष्ट्वाकिमाश्चर्यंवदप्रभो ८६ श्रीभगवानुवाच निहतेदानवेंद्रेस्मिन्संतुष्टोहंतवानघे हृष्टाःपुष्टाश्च
वैदेवाआनंदःसमजायत ८७ आनंदस्त्रिषुलोकेषुदेवानांयस्त्वयाकृतः प्रसन्नोस्म्यनघेतुभ्यंवरंवरयसुव्रते ८८ ददामितंनसंदेहोय

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्सुरैरपिदुर्लभं कन्योवाच यदितुष्टोसिमेदेवयः देयोवरोमम ८९ तारयेहंमहापापादुपवासपरंनरं उपवासस्ययत्पुण्यं तस्यार्धेनक्तभो
जने ९० तदर्धंच भवेत्तस्य एकभुक्तंकरोतियः यःकरोतिव्रतं भक्त्यादिनेम माजितेंद्रियः ९१ सगत्वावैष्णवंस्थानं कल्पकोटिशतानिच
भुंजानोविविधान्भोगानुपवासीजितेंद्रियः ९२ भगवंस्त्वत्प्रसादेन भवत्वेषवरोमम उपवासंचनक्तंच एकभुक्तंकरोतियः तस्यधर्मंच-
वित्तंच मोक्षंदेहिजनार्दन ९३ श्रीभगवानुवाच यत्वंवदसिकल्याणितत्सर्वंचभविष्यति ममभक्ताश्चयेलोकास्तवभक्ताश्चयेनराः
९४ त्रिषुलोकेषुविख्याताःप्राप्स्यंतिममसंनिधिं एकादश्यांसमुत्पन्नामममशक्तिःपरायतः ९५ अतएकादशीत्येवंतवनामभविष्य
ति दग्ध्वापापानिसर्वाणिदास्यामिपदमव्ययं ९६ तृतीयाचाष्टमीचैवनवमीचचतुर्दशी एकादशीविशेषेणातिथयोमेमहाप्रियाः ९७
सर्वतीर्थाधिकंपुण्यंसर्वदानाधिकंफलं सर्वव्रताधिकंचैवसत्यंसत्यंवदामिते ९८ एवंदत्वावरंतस्यास्तत्रैवांतरधीयत हृष्टातुष्टातुसा
जातातदाएकादशीतिथिः ९९ इमामेकादशींपार्थकरिष्यंतिनरास्तुये तेषांशत्रुंहनिष्यामिदास्यामिपरमांगतिं १०० अन्योपियेकरि-
ष्यंतिएकादश्यामहाव्रत हरामितेषांविघ्नांश्चसर्वसिद्धिंददामिच १ एवमुक्तासमुत्पत्तिरेकादश्याःपृथासुत इयमेकादशीनित्यासर्वपा
पक्षयंकरी २ एकैवचमहापुण्यासर्वपापनिषूदनी उदितासर्वलोकेषुसर्वसिद्धिकरीतिथिः ३ शुक्लावाप्यथवाकृष्णाइतिभेदंनकारयेत् कर्त
व्येउभयेपार्थनतुल्याद्वादशीतिथिः ४ अंतरंनैवकर्तव्यंसमस्तैर्व्रतकारिभिः तिथिरेकाभवेत्सर्वापक्षयोरुभयोरपि ५ एकादशीतुसंपूर्णाप्रभाते



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दतिश्चयदि सातिथिःपरिहर्तव्याउपोष्याद्वादशीतदा ६ एवंविधामयाप्रोक्तापक्षयोरुभयोरपि उपवासंप्रकुर्वंतिएकादश्यांनराश्चये ७
तेयांतिपरमंस्थानंयत्रास्तेगरुडध्वजः धन्यास्तेमानवालोकेविष्णुभक्तिपरायणाः ८ एकादश्यास्तुमाहात्म्यंसर्वलोकेषुयःपठेत् अश्वमेध
स्ययत्पुण्यंतदाप्नोतिनसंशयः ९ एकादश्यांनिराहारःस्थित्वाचाहंपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत १० इत्युच्चार्यततोविद्वा
न्पुष्पांजलिमथार्पयेत् अष्टाक्षरेणमंत्रेणत्रिर्जप्तेनाभिमंत्रितं ११ उपवासफलंप्रेप्सुः पिबेत्पात्रगतंजलं दिवानिद्रांपरान्नंचपुनर्भोजनमै
थुने १२ क्षौद्रंकांस्यामिषंतैलंद्वादश्यामष्टवर्जयेत् असंभाष्यहिसंभाष्यभक्षयेत्तुलसीदलं १३ आमलक्याःफलंवापिपारणेभक्ष्य
शुद्ध्यति आमध्यान्हात्तुराजेंद्रद्वादश्यामरुणोदये १४ स्नानार्चनक्रियाःकार्यादानहोमादिसंयुताः संकटेविषमेप्राप्तेद्वादश्यांपारणं
कथं १५ अद्भिस्तुपारणंकुर्यात्पुनर्भुक्तंनदोषकृत् यःशृणोतिदिवारात्रौनरोविष्णुपरायणः १६ तद्भक्त्यासुखनिष्पन्नांकथंविष्णोः
सुमंगला कल्पकोटिसमायुक्तोविष्णुलोकेमहीयते १७ एकादश्याश्चमाहात्म्यंपाद्मकंशृणोतियः ब्रह्महत्यादिकंपापंनश्यतेनात्रसं
शयः १८ विष्णुधर्मसमंनास्तिव्रतंनामसनातनं १९ इतिश्रीभवि० श्रीकृष्णार्जुनसंवादेमार्गशीर्षकृष्णैकादशीमाहात्म्यंसंपूर्णं अथ
मार्गशीर्षशुक्लैकादशीकथा युधिष्ठिरउवाच वंदेविष्णुंप्रभुंसाक्षाल्लोकत्रयसुखप्रदं विश्वेशंविश्वकर्तारंपुराणंपुरुषोत्तमं १ पृच्छा-
मिदेवदेवेशसंशयोस्तिमहान्मम लोकानांतुहितार्थायपापानांक्षयायच २ मार्गशीर्षेसितेपक्षेकिंनामैकादशीभवेत् कीदृशश्चविधिस्तस्याः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कोदेवस्तत्रपूज्यते ३ एतदाचक्ष्वमेस्वामिनूविस्तरेणयथातथं श्रीकृष्णउवाच सम्यक्पृष्टंत्वयाराजन्साधुतेविपुलंयशः ४ कथयिष्या-
मिराजेंद्रहरिवासरमुत्तमं उत्पन्नामासासितपक्षेद्वादशीममवल्लभा ५ मार्गशीर्षेसमुत्पन्नाममदेहान्नराधिप मुरस्यचवधार्थायप्ररव्या
ताममवल्लभा ६ कथितासामयाचैवत्वदग्रेराजस पूर्वमेकादशीराजन्त्रैलोक्येसचराचरे ७ मार्गशीर्षेसितेपक्षेचोत्पत्तिरितिनामतः
अतः परंप्रवक्ष्यामि मार्गशीर्षसितांतथा ८ तस्याःश्रवणमात्रेणवाजपेयफलंलभेत् मोक्षानाम्नीतिविरव्यातासर्वपापहरापरा ९ देवंदा
मोदरतस्यांपूजयेच्चप्रयत्नतः तत्रापिपूजनंचैवगीतनृत्यैःशुभमंगलैः १० शृणुराजेंद्रवक्ष्यामि कथांपौराणिकींशुभां अधोगतिंगतायेवै-
पितृमातृसुतादयः ११ अस्याःपुण्यप्रभावेनस्वर्गयांतिनसंशयः एतस्मात्कारणाद्राजन्महिमानंशृणुष्वतत् १२ घेकुलेव्यवसन्नृपः गोकुले
न्यवसन्नृपः वैखानसोतिराजर्षिःपुत्रवत्पालयन्प्रजाः १३ द्विजांश्चन्यवसंस्तत्रचतुर्वेदपरायणाः एवंसराज्यंकुर्वाणोरात्रौतुस्वप्नमध्यतः
१४ ददर्शजनकंस्वंतुअधोयोनिगतंनृपः एवंदृष्ट्वातुतंतत्रविस्मयोत्फुल्ललोचनः १५ कथयामासवृत्तांतंद्विजाग्रेस्वप्नसंभवं राजोवाच मया
तुस्वपितादृष्टोनरकेपतितोद्विजाः तारयस्वेतिमांतातअधोयोनिगतस्सुत १६ इतिब्रुवाणःसतदामयादृष्टःपितास्वयं तदाप्रभृतिभोवि
प्रानाहंशर्मलभाम्यहो १७ एतद्राज्यंममहदसत्यमकुरवंतथा अश्वागजारथाश्चैवनमांरोचंतिसर्वथा १८ नकोशोपिसुखायेतिनकिं-
चित्सुखदंमम नदारानसुतामत्यंरोचतिद्विजसत्तमाः १९ किंकरोमिक्वगच्छामिशरीरंमेतुदह्यते दानंव्रतंतपोयोगोयेनैवममपूर्वजाः २०





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मोक्षमायांतिविप्रेंद्रास्तद्देवकथयंतुमे किंतेनजीवतालोकेस्तुपुत्रेणबलीयसा २१ पितात्तुयस्यनरकेतस्यजन्मनिरर्थकं ब्राह्मणाऊचुः
पर्वतस्यमुनेरत्र आश्रमोनिकटेनृप २२ गम्यतांराजशार्दूलभूतंभव्यंविजानतः तेषांश्रुत्वाततोवाक्यंवैखानोराजसत्तमः २३ जगाम
तत्रयत्रासौआश्रमेपर्वतोमुनिः ब्राह्मणैर्वेष्टितःशांतैःप्रजाभिश्चसमंततः २४ आश्रमोविपुलस्तस्यमुनिभिःसन्निषेवितः ऋग्वेदिभि
र्यजुर्षैश्चसामाथर्वणकोविदैः २५ वेष्टितोमुनिभिःस्तत्रद्वितीयइवपद्मजः दृष्ट्वातंमुनिशार्दूलंराजावैखानसस्तदा २६ जगामचावनी
मूर्ध्नादंडवत्प्रणनामच पप्रच्छकुशलंतस्यसप्तस्वंगेषुसोमुनिः २७ राज्येनिष्कंटकत्वंचराज्येसौख्यसमन्वितं राजोवाच प्रसादात्कु
शलंविप्रअंगेषुममसप्तसु २८ विभवेषुत्तुकुलेषुकश्चिद्विघ्नउपस्थितः एतंमेसंशयंब्रह्मन्प्रष्टुंत्वांत्वसमागतः २९ एवंश्रुत्वानृपवचः
पर्वतोमुनिसत्तमः ध्यानस्तिमितनेत्रोसौभूतंभव्यंविचिंतयन् ३० मुहूर्तमेकंध्यात्वात्वप्रत्युवाचनृपोत्तमं मुनिरुवाच जानेहंतवराजेंद्र
पितुःपापंविकर्मणः ३१ पूर्वजन्मनितेपित्रासपत्नीकृतद्वेषतः कामासक्तेनचैकभंक्ऋतुभंगःकृतःस्त्रियः ३२ त्राहिदेहीतिजल्पंत्याकृ
तुदानंनराधिप तेनवैतवपित्रातुनदत्तोस्कृतुराग्रहात् ३३ कर्मणातेनसततंनरकेपतितोत्ययं राजोवाच केनवैव्रतदानेनमोक्षस्तस्य-
भवेन्मुने ३४ निरयात्पापसंयुक्तात्तन्ममाचक्ष्वपृच्छतः मुनिरुवाच मार्गशीर्षेसितेपक्षेमोक्षानाम्नीहरेस्तिथिः ३५ सर्वैस्तुत
द्व्रतंकृत्वापित्रेपुण्यंप्रदीयतां तस्याःपुण्यप्रभावेनमोक्षस्तस्यभविष्यति ३६ मुनेर्वाक्यंततःश्रुत्वानृपःस्वगृहमागतः आग्रहायणि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कीकृच्छ्रात्प्राप्तोभरतसत्तम ३७ अंतःपुरचरैःसर्वैः पुत्रैर्दारैस्तथानृपः व्रतंकृत्वाविधानेनपुण्यंदत्वानृपायतत् ३८ तस्मिन्दत्तेतदापुण्ये
पुष्पवृष्टिरभूद्दिवः वैखानसपितातेनगतःस्वर्गंस्तुतोगणैः ३९ राजाचमंतरिक्षाच्चशुद्धांगिरमभाषत स्वस्त्यस्तुतेपुत्रसदेत्युक्त्वाकास
त्रिदिवंगतः ४० एवंयःकुरुतेराजन्मोक्षामेकादशीमिमां तस्यपापंक्षयंयातिमृतोमोक्षमवाप्नुयात् ४१ नास्त्यपरतराकाचिन्मोक्ष-
दाविमलाशुभा पुण्यसंख्यातुराजेंद्रनजानेहंतुयैःकृता ४२ पठनाच्छ्रवणात्तस्यावाजपेयफलंलभेत् चिंतामणिसमाह्येषास्वर्गमोक्षप्र
दायिनी ४३ इतिश्रीब्रह्मांडपुराणेमार्गशीर्षशुक्लैकादश्यांमोक्षानाम्न्यामाहात्म्यंसंपूर्णं अथ षकृष्णैकादशीकथाप्रारभ्यते युधि
युधिष्ठिरउवाच पौषस्यकृष्णपक्षेतुद्वादशीयाभवेत्प्रभो किंनामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते १ एकदाचक्ष्वमेस्वामिन्विस्तरेण
जनार्दन श्रीकृष्णउवाच कथयिष्यामिराजेंद्रभवतःस्नेहकारणात् २ तथातुष्टिर्नमेराजन्क्रतुभिश्चाप्तदक्षिणैः यथातुष्टिर्भवेन्मह्य
मेकादश्याव्रतेनवै ३ तस्मात्सर्वप्रयत्नेनकर्तव्योहरिवासरः पौषस्यकृष्णपक्षेतुद्वादशीयाभवेन्नृप ४ तस्याश्चैवचमाहात्म्यंश्शृणुष्वैका-
ग्रमानसः गदितायाश्चवैराजन्एकादश्योभुवंतिहि ५ तासामपिहिसर्वासांविकल्पंनैवकारयेत् तथापित्वेकादश्याश्च शृणुराजन्क
थानकं ६ अतःपरंप्रवक्ष्यामिपौषस्यैकादशीतव लोकानांचहितार्थायकथयिष्येविधिंतव ७ पौषस्यकृष्णपक्षेयासफलानामनामतः
नारायणोधिदेवोस्याःपूजयेत्तंप्रयत्नतः ८ पूर्णेनविधिनाराजन्कर्तव्यैकादशीजनैः नागानांचयथाशेषःपक्षीणांगरुडोयथा ९ यथा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

श्वमेधो यज्ञानां नदीनां जान्हवी यथा व्रतानां च तथा राजन्प्रवरैकादशी तिथिः १० तेजनाभरतश्रेष्ठ मम पूज्याश्च सर्वशः हरिवासरसंयुक्ता
वर्तंते ये जना भुवि ११ सफलानाम या प्रोक्ता तस्याः पूजाविधिं शृणु फलैर्मां पूजयेत्तत्र कालदेशोद्भवैः शुभैः १२ नारीकेरफलैः शुद्धैस्तथा वै
बीजपूरकैः जंबीरैर्दाडिमैश्चैव तथा पूगीफलैरपि १३ लवंगैर्विविधैश्चान्यैस्तथा चाम्रफलादिभिः पूजयेद्देवदेवेशं धूपैर्दीपैर्यथाक्रमं १४
सफलायां दीपदानं विशेषेण प्रकीर्तितं रात्रौ जागरणं तत्र कर्तव्यं च प्रयत्नतः १५ यावदुन्मीलयेन्नेत्रं तावज्जागर्ति यो निशि एकाग्रमानसो
भूत्वा तस्य पुण्यं शृणुष्व तत् १६ तत्समो नास्ति वै यज्ञो तीर्थं तत्सदृशं नहि तत्समं न व्रतं किंचिदिह लोके नराधिप १७ पंचवर्षसहस्राणि त
तपस्तप्त्वा च यत्फलं तत्फलं समवाप्नोति सफलायाव्रतेन वै १८ श्रूयतां राजशार्दूल सफलायाः कथानकं चंपावतीति विख्याता पुरी माहि-
ष्मतस्य च १९ माहिष्मतस्य राजर्षेश्चत्वारश्चाभवन्सुताः तेषां मध्ये तु यो ज्येष्ठः स महापापसंयुतः २० परदाराभिगामी च वेश्यासंगरतः स-
दा पितुर्द्रव्यं स पापिष्ठो गमयामास सर्वशः २१ असद्वृत्तिरतो नित्यं देवताद्विजनिंदकः वैष्णवानां च देवानां नित्यं निंदारतः सदा २२ ईदृग्विधं तदा दृ-
ष्ट्वा पुत्रं माहिष्मतो नृपः लुंपको नाम नाम्नेति कृतवानत्यमर्षितः २३ राज्यान्निष्कासितस्तेन पित्रा चैवापि बंधुभिः परिवारजनैः सर्वैस्त्यक्तो राज्ञो
भयादिति २४ लुंपकोपि तदा त्यक्तश्चिंतयामास चैकलः मया त्वत्र किं प्रकर्तव्यं त्यक्तः पित्रा च बांधवैः २५ इति चिंतापरो भूत्वा मतिं पापे तदाकरोत् मयानुगम
नं कार्यं वने त्यक्त्वा परं पितुः २६ तस्माद्वनान्पितुः सर्वं व्यापयिष्ये पुरं निशि दिवा वने चरिष्यामि रात्रावपि पितुः पुरं २७ इत्येवं समतिकृत्वा लुंपको दे-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

१९१

[illegible] २८ ओषधानकारो नुत्यंनित्यंतत्परायणः संवन्नगरंतेनमुषितंपापकर्मणा २९ गृहीतश्च
परित्यक्तोराज्ञोमाहिष्मतेर्भयात् जन्मांतरीयपापेनराज्यभ्रष्टःसपापकृत् ३० आमिषाभिरतोनित्यंनित्यंवैफलभक्षकः आश्रमस्तस्य
दुष्टस्यवासुदेवस्यसंमतः ३१ अश्वत्थोवर्ततेतत्रजीर्णोबहुलवार्षिकः देवत्वंतस्यवृक्षस्यवर्ततेतद्वनेमहत् ३२ तत्रैववनिवसंश्चासौलुं
पकःपापबुद्धिमान् एवंकालक्रमेणैववसतस्तस्यपापिनः ३३ दुष्कर्मनिरतस्यास्यकुर्वतःकर्मनिंदितं पौषस्यकृष्णापक्षेतुपूर्वाण्हेस
फलादिने ३४ दशमीदिवसेराजन्निशायांशीतपीडितः लुंपकोवस्त्रहीनोवैनिश्चेष्टोह्यभवत्तदा ३५ पीड्यमानस्तुसीतेनअश्वत्थ
स्यसमीपगः ननिद्रानसुखंतस्यगतप्राणइवाभवत् ३६ पीडयंदशनैर्दंतानेवंचगमितानिशा भानूदयेपितस्याथनसंज्ञासमजायत ३७
लुंपकोगतसंज्ञस्तुसफलादिवसेतदा मध्यान्हसमयेप्राप्तेसंज्ञांलेभेसलुंपकः ३८ प्राप्तसंज्ञोमुहूर्तेनचोत्थितोसौतदासनात् प्रस्खलं
श्चपदन्यासैःपंगुवच्चलितोमुहुः ३९ वनमध्येगतस्तत्रक्षुत्तृषापीडितोभवत् नशक्तिर्जीवघातेस्यलुंपकस्यदुरात्मनः ४० फलानिभू
मौपतितान्याजहारसलुंपकः यावत्सचागतस्तत्रतावदस्तमगाद्रविः ४१ किंभविष्यतितातेतिविललापातिदुःखितः फलानितानिसर्वा
णिवृक्षमूलेन्यवेदयत् ४२ प्रत्युवाचफलैरेभिःप्रीयतांभगवान्हरिः उपविष्टोलुंपकश्चनिद्रांलेभेनवैनिशि ४३ तेनजागरणंजातंभगवा
न्मधुसूदनः फलानांपूजनंमेनेसफलायास्तथाव्रतं ४४ कृतमेवंलुंपकेनह्यकस्माद्व्रतमुत्तमं तेनव्रतप्रभावेनप्राप्तंराज्यमकंटकं ४५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुण्यांकुरोदयाद्राजन्यथाप्राप्तंतथाशृणु रवेरुदयवेलायांदिव्योश्वश्चाजगामह ४६ दिव्यवस्तुपरीवारोलुंपकस्यसमीपतः तस्थौसतुरगो
राजन्वागुवाचाशरीरिणी ४७ प्राप्नुहित्वंनृपसुतस्वराज्यंहतकंटकं वासुदेवप्रसादेनसफलायाःप्रभावतः ४८ पितुःसमीपंगच्छत्वं-
भुंक्ष्वराज्यमकंटकं तथेत्युक्त्वातुसौतत्रदिव्यरूपधरोभवत् ४९ कृष्णेमतिश्चतस्यासीत्परमावैष्णवीतथा दिव्याभरणशोभाढ्य
स्तातंनत्वास्थितोगृहे ५० वैष्णवायततोदत्तंपित्राराज्यमकंटकं कृतंराज्यंतुतेनैवववर्षाणिसुबहून्यपि ५१ हरिवासरसंलीनोविष्णु-
भक्तिरतःसदा मनोज्ञास्तस्यपुत्राश्चसुदाराःकृष्णप्रसादतः ५२ ततःसवार्धकेराज्येप्राप्तेपुत्रंनिवेश्यच वनंगतःसंयतात्माविष्णुभक्तिप
रायणः ५३साधयित्वातथात्मानंविष्णुलोकंजगामह गतःकृष्णस्यसान्निध्येयत्रगत्वानशोचति ५४ एवंयेवैप्रकुर्वंतिसफलैकाद-
शीव्रतं इहलोकेयशःप्राप्यमोक्षंयास्यंत्यसंशयः ५५ धन्यास्तेमानवालोकेसफलाव्रतकारिणः तस्मिन्जन्मनितेमोक्षंलभंतेनात्रसं
शयः ५६ सफलायाश्चमाहात्म्यश्रवणाद्धिविशांपते राजसूयफलंप्राप्यवसेत्स्वर्गेचमानवः ५७ इतिपौषकृ०सफलानाम्न्या०संपूर्णं

अथपौषशुक्लैकादशीकथा युधिष्ठिरउवाच कथितावैत्वयाकृष्णसफलैकादशीशुभा कथयस्वप्रसादेनशुक्लापौषस्ययाभ
भवेत् १ किंनामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते कस्मैतुष्टोहृषीकेशस्त्वमेवपुरुषोत्तम २ श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिशु
क्लापौषस्ययाभवेत् तस्याविधिंमहाराजन्लोकानांचहितायवै ३ पूर्वेणविधिनाराजन्कर्तव्येषाप्रयत्नतः पुत्रदेतिचनाम्नासौसर्वपापह

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रापरा ४ नारायणोधिदेवोस्याः कामदः सिद्धिदायकः नातः परतरा कांचित्त्रैलोक्ये सचराचरे ५ विद्यावंतं यशस्वंतं करोति च नरं हरिः शृणु राज
न्प्रवक्ष्यामि कथां पापहरां परां ६ पुरी भद्रावती नाम्नी राजा तत्र सुकेतुमान् तस्य राज्ञोथ राज्ञी च शैब्या नाम्नीति विश्रुता ७ पुत्रहीनेन राज्ञा च-
कालो नीतो मनोरथैः नैवात्मजं नृपो लेभे वंशकर्तारमेव च ८ तेनैव राज्ञा धर्मेणार्चितं तं बहुकालतः किं करोमि क्व गच्छामि सुतप्राप्तिः कथं भ
वेत् ९ न राष्ट्रेन पुरे सौख्यं लेभे राजा सुकेतुमान् शैब्यया कांतया सार्द्धं प्रत्यहं दुःखितोभवत् १० तावुभौ दंपती नित्यं चिंताशोकपरायणौ पि
तरस्तु जलं दत्तं कवोष्णमुपभुंजते राज्ञः पश्चान्न पश्यामो यो नोष्मान् संतर्पयिष्यति ११ इत्येवं संस्मरंतोस्य पितरो दुःखिनोभवत् तेषां तद्दुःखमू
लं च ज्ञात्वा राजाप्यतप्यत १२ न बांधवा न मित्राणि नामात्याः सुहृदस्तथा रोचंते तस्य भूपस्य न गजाश्वपदातयः १३ नैराश्यं भूपतेस्तस्य मन
स्येवमजायत नरस्य पुत्रहीनस्य नास्ति वै जन्मनः फलं अपुत्रस्य गृहं शून्यं हृदयं दुःखितं सदा १४ पितृदेवमनुष्याणां नानृणित्वं सुतं विना त
स्मात्सर्वप्रयत्नेन सुतमुत्पादयेन्नरः १५ इह लोके यशस्तेषां परलोके शुभा गतिः येषां तु कर्मकर्तॄणां पुण्यं जन्मशतोद्भवं १६ आयुरारोग्यसं
पत्तिस्तेषां गेहे प्रवर्तते पुत्राः पौत्राश्च लोकाश्च भवेयुः पुण्यकर्मणां १७ पुण्यं विना न च प्राप्तिर्विष्णुभक्तिं विना तथा पुत्राणां संपदो वा
पि विद्यायाश्चेति मे मतिः १८ एवं चिंतयमानोसौ राजा शर्म न लब्धवान् प्रत्यूषे चिंतयद्राजा निशीथे चिंतयत्तथा १९ ततश्चात्मविनाशं वै वि
चार्याथ सुकेतुमान् आत्मघाते दुर्गतिं च चिंतयित्वा तदा नृपः २० दृष्ट्वात्मदेहं प्रक्षीणमपुत्रत्वं तथैव च पुनर्विचार्यात्मबुद्ध्यात्यात्मनो हि





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तकारणं २१ अश्वारूढस्ततोराजाजगामगहनंवनं पुरोहितादयः सर्वे नजानंतिगतंनृपं २२ गंभीरे विपिनेराजामृगपक्षिनिषेविते विचचारत
दानस्मिन्वनवृक्षान्विलोकयन् २३ वटानश्वत्थबिल्वांश्च खर्जुरान्पनसांस्तथा बकुलांश्चसदापर्णान्तिंदुलांस्तिलकानपि २४ शालांस्तालांस्त
मालांश्चददर्शसरलान्नृपः इंगुदीककुभांश्चैवश्लेष्मातकबिभीतकान् २५ शल्लकीकरमर्दांश्च पाटलान्खदिरानपि शाकांश्चैवपलाशां
श्च शोभितान्ददर्शपुनः २६ मृगव्याघ्रवराहांश्चसिंहान्शरभान्मृगानपि ददर्शभुजगान्राजावल्मीकादभिनिःसृतान् २७ तथावनगजान्म
त्तान्कलभैः सहसंगतान् यूथपांश्चचतुर्दंतान्करिणीगणमध्यगान् २८ तांदृष्ट्वाचिंतयामासत्यात्मनःसंगजान्नृपः तेषांसविचरन्मध्येरा
जाशोकमवापह २९ महदाश्चर्यसंयुक्तंददर्शविपिनंनृपः क्वचिच्छिवारुतं शृण्वन्नुलूकविरुतंतथा ३० तांस्तान्पक्षिगणान्पश्यन्बभ्रामव
नमध्यगः एवंददर्शगहनंनृपोमध्यगतेरवौ ३१ क्षुत्तृड्भ्यांपीडितोराजाइतश्चेतश्चधावति चिंतयामासनृपतिःसंशुष्कगलकंधरः ३२ मयाकुर्किं
कृतंकर्मप्राप्तंदुःखंयदीदृशं मयावैतोषितादेवायज्ञैःपूजाभिरेवच ३३ तथैवब्राह्मणादानैस्तोषितामिष्टभोजनैः प्रजाश्चैवयथाकालंपुत्रवत्प-
रिपालिताः ३४ कस्माद्दुःखंमयाप्राप्तमीदृशंदारुणंमहत् इतिचिंतापरोराजाजगामाथाग्रतोवनं ३५ सुकृतस्यप्रभावेनसरोदृष्टंमनोरमं मानसंस्पर्धि
मानंचपद्मिनीपरिशोभितं ३६ कारंडवैश्चक्रवाकैराजहंसैश्चनादितं मकरैर्बहुभिर्युक्तमन्यैर्जलचरैर्युतं ३७ समीपेसरसस्तत्रमुनीनामाश्रमान्बहून्
ददर्शराजालक्ष्मीवानिमित्तैःशुभशंसिभिः ३८ सव्यात्परतरंचक्षुःप्रास्फुरच्चतथाकरः स्फुरितेस्तस्यराज्ञश्चशंसितंशुभलक्षणं ३९ तस्यतीरमुनीन्-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इक्ष्वाकुर्वाणान्नैगमंजपं अवतीर्यहयात्तस्मान्मुनीनामग्रतःस्थितः ४० पृथक्पृथक्ववंदेसमुनींस्तान्शंसितव्रतान् कृतांजलिपुटोभूत्वादंडव
च्चप्रणम्यसः ४१ हर्षेणमहताविष्टोबभूवनृपसत्तमः तमूचुस्तेपिमुनयःप्रसन्नोस्मोवयंतव ४२ कथयस्वाद्यवैराजन्यत्तेमनसिवर्त्तते रा
जोवाच केयूयमुग्रतपसःकिमाख्याभवतामपि ४३ किमर्थमागतायूयंवदंतुममतत्वतः मुनयऊचुः विश्वेदेवावयंराजन्स्नानार्थमिह
चागताः ४४ माघोनिकटमायातएतस्मात्पंचमेहनि अद्यत्वेकादशीराजन्पुत्रदानामनामतः ४५ पुत्रंददात्यसौशुक्लापुत्रदापुत्रमिच्छ
तां राजोवाच एषवैसंशयोमह्यंस्कृतस्योत्पादनेमहान् ४६ यदितुष्टाभवंतोमेपुत्रोवैदीयतांतदा मुनयऊचुः अस्मिन्नेवदिनेराजन्पुत्रदा
नामवर्तते ४७ एकादशीतिविख्याताक्रियतांव्रतमुत्तमं आशीर्वादेनचास्माकंकेशवस्यप्रसादतः ४८ अवश्यंतवराजेंद्रपुत्रप्राप्तिर्भवि
ष्यति इत्येववचनात्तेषांकृतंराज्ञाव्रतंशुभं ४९ द्वादश्यांपारणंकृत्वामुनीन्नत्वापुनःपुनः आजगामगृहंराजाराज्ञीगर्भंसमादधौ ५० मु
नीनांवचनेनैवपुत्रदायाःप्रसादतः पुत्रोजातस्तथाकालेतेजस्वीपुण्यकर्मकृत् ५१ पितरंतोषयामासप्रजापालोबभूवसः एतस्मात्का
रणाद्राजन्कर्तव्यंपुत्रदाव्रतं ५२ लोकानांचहितार्थायतवाग्रेकथितंमया एतद्व्रतंतुयेमर्त्याःकुर्वंतिपुत्रदाभिधं ५३ तेषांचैवभवेत्पुत्रो-
त्यवश्यंमोक्षभागिनां पठनाच्छ्रवणाद्राज न्नश्वमेधफलंलभेत् ५४ इतिश्रीभवि० पौषशुक्लैकादशीपुत्रदानाम्न्यामाहा० संपूर्णं
अथमाघकृष्णैकादशीकथा दाल्भ्यउवाच मर्त्यलोकेतुसंप्राप्ताःपापंकुर्वंतिजंतवः ब्रह्महत्यादिपापैश्चत्वन्यैश्चविविधैर्युताः १



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

परद्रव्यापहाराश्च परव्यसनमोहिताः कथंनायांतिनरकान्ब्रह्मंस्तद्ब्रूहितत्वतः २ अनायासेनभगवन्दानेनाल्पेनकेनचित् पापंप्रशममा
यांतियेनतद्वक्तुमर्हसि ३ गभस्तिरुवाच साधुसाधुमहाभागगुह्यमेतद्दुरात्मनां यन्नकस्यचिदाख्यातंब्रह्माद्यैर्वेदवेदिभिः ४ तद
हंकथयिष्यामियत्त्वयापृष्टोद्विजोत्तम ततोमाघेतुसंप्राप्तेशुचिस्नातोजितेंद्रियः ५ कामक्रोधाभिमानेर्ष्यालोभपैशुन्यवर्जितः देवदे
वंचसंस्मृत्यपादौप्रक्षाल्यवारिणा ६ भूमावपतितंग्राह्यंगोमयंतत्रमानवैः तिलान्प्रक्षिप्यकार्पासंपिंडकांश्चैवकारयेत् ७ अष्टोत्तरशतंचै
वनात्रकार्याविचारणा ततोमाघेचसंप्राप्तेत्वाद्रीचैवभवेद्यदि ८ मूलेवाकृष्णपक्षस्यैकादश्यांनियमंततः गृण्हीयात्पुण्यफलदंविधा
नंतत्रमेशृणु ९ देवदेवंसमभ्यर्च्यसुस्नातःप्रयतःशुचिः कृष्णनामानिसंकीर्त्यक्षुतजृंभास्खलनेसर्वदा १० रात्रौजागरणंकुर्याद्रात्रौहोमंचकारये
त् अर्चयेद्देवदेवेशंशंखचक्रगदाधरं ११ चंदनागरुकर्पूरैर्नैवेद्यंकृसरंतथा संस्मृत्यनाम्नाचततःकृष्णाख्येनपुनःपुनः १२ कूष्मांडैर्नारिकेरै
श्चाप्यथवाबीजपूरकैः सर्वाभावेपिविप्रेंद्रशस्तंपूगीफलंतथा १३ अर्घ्यंदत्वाविधानेनपूजयित्वाजनार्दनं कृष्णकृष्णकृपालुस्त्वमगतीनांगति
र्भव १४ संसारार्णवमग्नानांप्रसीदपरमेश्वर नमस्तेपुंडरीकाक्षनमस्तेविश्वभावन १५ सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज गृहाणार्घ्यंमयाद
त्तंलक्ष्म्यासहजगत्पते १६ ततस्तुपूजयेद्विप्रंसुदकुंभंप्रदापयेत् छत्रोपानहवस्त्रैश्चकृष्णोमेप्रीयतामिति १७ कृष्णाधेनुःप्रदातव्यायथाश
क्त्याद्विजोत्तम तिलपात्रंद्विजश्रेष्ठदद्यात्तत्रविचक्षणः १८ स्नानप्राशनयोःशस्ताःश्वेताःकृष्णास्तिलामुने तान्प्रदद्यात्प्रयत्नेनयथाशक्त्याद्वि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जोत्तम १९ तावद्वर्षसहस्राणि स्वर्गलोके महीयते तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी २० तिलभुक्तिलदाता च षट्तिलाः पापनाशकाः
नारद उवाच कृष्ण कृष्ण महाबाहो नमस्ते भक्तभावन २१ षट्तिलैकादशी भूतं कीदृशं फलमश्नुते सोपाख्यानं मम ब्रूहि यदि तुष्टोसि यादव
२२ श्रीकृष्ण उवाच शृणु राजन् यथावृत्तं दृष्टं तत्कथयामि ते मृत्युलोके पुरा ह्यासी ब्राह्मणी तत्र नारद २३ व्रतचर्यारता नित्यं देवपूजारता सदा
मासोपवासनिरता मम भक्ता च सर्वदा २४ कृष्णोपवाससंयुक्ता मम पूजापरायणा शरीरं क्लेशितं नित्यमुपवासैर्द्विजोत्तम २५ दीनानां ब्राह्म
णानां च कुमारीणां च भक्तितः गृहादिकं प्रयच्छंति सर्वकालं महामतिः २६ अति कृच्छ्ररता सा तु सर्वकालेषु वै द्विज शुद्धमस्याः शरीरं हि व्रतैः
कृच्छ्रैर्न संशयः २७ अथ निर्वैष्णवं लोकं कायक्लेशेन वै नया न दत्तमन्नदानं हि येन तृप्तिः परा भवेत् २८ एतज्ज्ञातं मया ब्रह्मन् मृत्युलोकमुपा-
गतः कापिलं रूपमास्थाय भिक्षापात्रेण याचिता २९ ब्राह्मण्युवाच कस्मात्त्वमागतो ब्रह्मन् वद यस्मात्समागतः पुनरेवं मया प्रोक्तं देहि भिक्षां
च सुंदरि ३० तया कोपेन महता मृत्पिंडस्ताम्रभाजने क्षिप्तो यावत्त्वया देव्या पुनः स्वर्गं गतो द्विज ३१ ततः कालेन महता तापसी सुमहाव्रता कदाचि
त्स्वर्गमायाता व्रतचर्याप्रभावतः ३२ मृत्पिंडस्य प्रभावेन गृहं प्राप्तं मनोरमं संजातं चैव विप्रर्षे धान्यकोशविवर्जितं ३३ गृहं यावन्निरीक्षेत न किं-
चित्तत्र पश्यति यावद्गृहाद्विनिष्क्रांता मम मां ते चागता द्विज ३४ क्रोधेन महताविष्टा इदं वचनमब्रवीत् मयाव्रतैश्च कृच्छ्रैश्च बहु उपवासैरनेकशः
३५ पूजयाराधितो देवः सर्वलोकस्य भावनः न धनं दृश्यते किंचिद्गृहे मम जनार्दन ३६ ततश्चोक्ता मया सा तु गृहं गच्छ यथागतं आगमिष्यंति सु-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तरांकौतूहलसमन्विता: ३७ देवपत्न्यस्तवद्रष्टुंविस्मयेनसमन्विता: द्वारंनोद्घाटनीयंहिषट्तिलापुण्यवाचनात् ३८ एवमुक्तागतासातुयदादेवेमा
नुषीतदा अत्रांतरेसमायातादेवपत्न्यश्चनारद ३९ ताभिश्चकथितंतत्रत्वांद्रष्टुंहिसमागता: द्वारमुद्घाटयत्वंचपश्यामस्त्वांशुभानने ४० मा
नुष्युवाच यदिद्रष्टुंमयाकार्यंसत्यंवाच्यंविशेषत: षट्तिलाव्रतपुण्यंद्वारोद्घाटनकारणात् ४१ एकापितत्रनवदत्षट्तिलाव्रतनाशत:
अन्ययाकथितंतत्रद्रष्टव्यामानुषीमया ४२ ततोद्वारंसमुद्घाट्यदृष्टाताभिश्चमानुषी नदेवीनचगंधर्वीनासुरीनचपन्नगी ४३ दृष्टापूर्वंत
यानारीईदृशीसाद्विजर्षभ रूपकांतिसमायुक्ताक्षणेनसमपद्यत ४४ धनंधान्यंचवस्त्रादिस्वर्णंरौप्यमेवच सर्वंभवनसंपन्नंषट्तिला
या:प्रसादत: ४५ अतितृष्णानकर्तव्यावित्तशाठ्यंविवर्जयेत् आत्मवित्तानुसारेणतिलान्वस्त्रादिदापयेत् ४६ लभतेचैवमारोग्यंततो
जन्मनिजन्मनि दारिद्र्यंनचकष्टंवैनचदौर्भाग्यमेवच ४७ नभवेद्वैद्विजश्रेष्ठषट्तिलायामुपोषणात् अनेनविधिनाराजन्तिलदानान्नसंशय:
४८ मुच्यतेपातकै:सर्वैर्नात्रकार्याविचारणा दानंचविधिनासम्यक्सर्वपापप्रणाशनं ४९ नानर्थ:कश्चिन्नायास:शरीरेमुनिसत्तम ५०
इतिश्रीभविष्यो॰माघकृष्णैका॰षट्तिलानाम्नीमाहात्म्यंसं॰ अथमाघशुक्लैकादशीकथा युधिष्ठिरउवाच साधुकृष्णत्वयाप्रोक्ताआदि
देवजगत्पते स्वेदजाअंडजाश्चैवउद्भिजाश्चजरायुजा: १ तेषांकर्तादिकर्ताचपालक:क्षयकारक: माघस्यकृष्णपक्षेतुषट्तिलाकथितात्व
या २ शुक्लेचैकादशीयाचकथयस्वप्रसादत: किन्नामकोविधिस्तस्या:कोदेवस्तत्रपूज्यते ३ श्रीकृष्णउवाच कथयिष्यामिराजेंद्रशुक्लेमा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्र० रा०
१९५

यस्ययाभवत् जयानाम्नीतिविख्यातासर्वपापहरापरा ४ पवित्रापापहंत्रीचपिशाचत्वविनाशिनी नैवतस्याव्रतेचीर्णेप्रेतत्वंजायतेनृणां ५ नातः
परतरांकाचित्पापघ्नीमोक्षदायिनी एतस्मात्कारणाद्राजन्कर्तव्येयंप्रयत्नतः ६ श्रूयतांराजशार्दूलकथांपौराणिकींशुभां पंकजेचपुराणेस्याम
हिमाकथितोमया ७ एकदानागलोकेवैइंद्रोराज्यंचकारह देवाश्चतत्रसौख्येननिवसंतिमनोरमे ८ पीयूषपाननिरताह्यप्सरोगणसेविताः नंद
नंतुवनंतत्रपारिजातोपशोभितं रमयंतिरमंत्यत्रह्यप्सरोभिर्दिवौकसः एकदारममाणोसौदेवेंद्रःस्वेच्छयानृप १० नर्तयामासहर्षात्सपंचाशत्को
टिनायिकाः गंधर्वास्तत्रगायंतिगंधर्वःपुष्पदंतकः ११ चित्रसेनश्चतत्रैवचित्रसेनसुतातथा मालिनीतिचनाम्नातुचित्रसेनस्यकामिनी १२ मालि
न्यातुसमुत्पन्नःपुष्पवंतीतिनामतः पुष्पदंतस्यपुत्रोवैमाल्यवान्नामनामतः १३ गंधर्वीपुष्पवत्याख्यामाल्यवत्यतिमोहिता कामस्यचशरैः
स्तीक्ष्णैर्विद्धांगीसाबभूवह १४ तयाभावकटाक्षैश्चमाल्यवांस्तुवशीकृतः लावण्यरूपसंपन्नातस्यारूपंनृपशृणु १५ बाहूतस्यास्तुकामेन
कंठपाशौकृताविव चंद्रवद्दर्शनंतस्यानयनेश्रवणायते १६ कर्णौतुशोभितौतस्याःकुंडलाभ्यांनृपोत्तम कंबुग्रीवायुताचैवदिव्याभरण
भूषिता १७ पीनोन्नतौकुचौतस्यामुष्टिमात्रंचमध्यमं नितंबौविपुलौतस्याविस्तीर्णंजघनस्थलं १८ चरणौशोभमानौतौरक्तोत्पलसमद्यु
ती ईदृश्यापुष्पवत्यात्वमाल्यवानतिमोहितः १९ शक्रस्यपरितोषायनृत्यार्थंतौसमागतौ गायमानौचतौतत्रह्यप्सरोगणसंगतौ २० नशु
द्धगानंगायेतांचित्तभ्रमसमन्वितौ बद्धदृष्टितथान्योन्यंकामबाणवशंगतौ २१ ज्ञात्वालेखर्षभस्तत्रसंगतंमानसंतयोः तालकालक्रियामा

ए० मा०
११
१९५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नलोपाङ्गीतावभंजनात् २२ चिंतयित्वातुमघवानवज्ञातंतथात्मनः कुपितश्चतयोरित्थंशापंदास्यन्निदंजगौ २३ धिग्वांपापरतौमूढावाज्ञाभंगक
रौमम युवांपिशाचौभवतांदंपतीरूपधारिणौ २४ मृत्युलोकमनुप्राप्तौभुंजानौकर्मणःफलं एवंमघवताशप्तावुभौदुःखितमानसौ २५ हिमवंत
मनुप्राप्ताविंद्रशापविमोहितौ उभौपिशाचतांप्राप्तौदारुणंदुःखमेवच २६ संतप्तमानसौतत्रमहाकृच्छ्रगतावुभौ गंधरसंचस्पर्शंचनजानंतौविमो-
हितौ २७ पीडयमानौतुदाहेनदेहपातकरेणच तौननिद्रांसुखंप्राप्तौकर्मणातेनपीडितौ २८ परस्परंवादमानौचेरतुर्गिरिगह्वरे पीडयमा
नौतुसीतेनतुषारप्रभवेनतौ २९ दंतघर्षंप्रकुर्वाणौरोमांचितवपुर्धरौ ऊचेपिशाचःशीतार्तःस्वपत्नींतुपिशाचिकां ३० किमावाभ्यांकृतंपापम
त्युग्रंदुःखदायकं येनप्राप्तंपिशाचत्वंस्वेनदुष्कृतकर्मणा ३१ नरकंदारुणंमत्वापिशाचत्वंचगर्हितं तस्मात्सर्वप्रयत्नेनपापंनैवसमाचरेत्
३२ इतिचिंतापरौतत्रप्यास्तांदुःखेनकर्षितौ दैवयोगात्तयोःप्राप्तामाघस्यैकादशीसिता ३३ जयानाम्नीतिविख्यातातिथीनामुत्तमातिः
थिः तस्मिन्दिनेतुसंप्राप्तेतावाहारविवर्जितौ ३४ आसातेतत्रनृपतेजलपानविवर्जितौ नकृतोजीवघातश्चनपत्रफलभक्षणं ३५ अश्वत्थ
स्यसमीपेतुपतितौदुःखसंयुतौ रविरस्तंगतोराजन्तथैवस्थितयोस्तयोः ३६ प्राप्तानैवनिशाघोरादारुणाशीतधारिणी वेपमानौतुतौत
त्रहिमेनचजडीकृतौ ३७ परस्परेणसंलग्नौगात्रयोर्भुजयोरपि ननिद्रांनरतिंतत्रनतौसौख्यमविंदतां ३८ एवंतौराजशार्दूलशापेनेंद्रस्यः
पीडितौ इत्थंतयोर्दुःखितयोर्निर्जगामतदानिशा जयायास्तुव्रतेचीर्णेरात्रौजागरणेकृते ३९ तयोर्व्रतप्रभावेनयथाऽत्यासीत्तथाशृणु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ब्र॰रा॰
१९६

द्वादशीदिवसेप्राप्तेताभ्यांचीर्णेजयाव्रते ४० विष्णोः प्रभावान्नृपते: पिशाचत्वंतयोर्गतं पुष्पवंतीमाल्यवांश्चपूर्वरूपौबभूवतुः ४१ पुरा तनस्नेहयुतौपूर्वालंकारसंयुतौ विमानमधिरूढौताबप्सरोगणसेवितौ ४२ स्तूयमानौतुगंधर्वैस्तुंबरुप्रमुखैस्तथा हावभावसमायुक्तौ गतौनाकेमनोरमे ४३ देवेंद्रस्याग्रतोगत्वाप्रणामंचक्रतुर्मुदा तथाविधौतुतौदृष्ट्वामघवान्विस्मितोब्रवीत् ४४ इंद्रउवाच वदतंकेनपुण्ये नपिशाचत्वंविनिर्गतं ममशापवशंप्राप्तौकेनदेवेनमोचितौ ४५ माल्यवानुवा॰ वासुदेवप्रसादेनजयायाःकृतव्रतेन च पिशाचत्वंगतं स्वामिन्सत्यंभक्तिप्रसादतः ४६ इतिश्रुत्वावचस्तस्यप्रत्युवाचसुरेश्वरः पवित्रौपावनौजातौवंदनीयौममापि च ४७ हरिवासरकर्तारो विष्णुभक्तिपरायणो हरिभक्तिरतायेचशिवभक्तिरतास्तथा ४८ अस्माकमपितेमर्त्याःपूज्यावंद्यानसंशयः विहरस्वयथासौख्यंपुष्प वत्यासुरालये ४९ एतस्मात्कारणाद्राजन् कर्तव्योहरिवासरः जयाव्रतंतुराजेंद्रब्रह्महत्यापहारकं ५० सर्वदानानिदत्तानियज्ञास्तेनकृतान्नृप स र्वतीर्थेषुसुस्नातःकृतंयेनजयाव्रतं ५१ यःकरोतिनरोभक्त्याश्रद्धायुक्तोजयाव्रतं कल्पकोटिशतंयावद्वैकुंठेमोदतेध्रुवं ५२ पठनाच्छ्रवणा द्राजन्नग्निष्टोमफलंलभेत् ५३ इतिश्रीभ॰माघशुक्ल॰जयामाहात्म्यंसं॰ अथफाल्गुनकृष्णैकादशीकथा युधिष्ठिरउ॰ फाल्गुनस्यासि तेपक्षेकिन्नामैकादशीभवेत् वासुदेवप्रसादेनकथयस्वप्रसादतः १ श्रीकृष्णउ॰ कथयिष्यामिराजेंद्रकृष्णायाफाल्गुनीभवेत् विजयेतिन साप्रोक्ताकर्तॄणांजयदासदा तस्याश्चव्रतमाहात्म्यंसर्वपापहरंपरं नारदःपरिपप्रच्छब्रह्माणंकमलासनं फाल्गुनस्यासितेपक्षेविज-

ए॰मा॰
११

१९६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यानामयातिथिः तस्याव्रतंसुरश्रेष्ठकथयस्वप्रसादतः ४ इतिपृष्टोनारदेनप्रत्युवाचपितामहः ब्रह्मोवाच शृणुनारदवक्ष्यामिकथांपापहरांप
रां ५ पुरातनंव्रतंत्वेतत्पवित्रंपापनाशनं यन्नकस्यचिदाख्यातंमयैतद्द्विजयाव्रतं ६ जयंददातिविजयानृणांचैवनसंशयः रामस्तपोवनंयातो
वर्षाण्येवचतुर्दश ७ न्यवसत्पंचवट्यांतुससीतश्चसलक्ष्मणः तत्रैववसतस्तस्यराघवस्यमहात्मनः ८ रावणेनहृताभार्यासीतानाम्नीतपस्विनी
तेनदुःखेनरामोसौमोहमभ्यागतस्तदा ९ भ्रमंजटायुषंतत्रददर्शविगतायुषं कबंधोनिहतःपश्चात्भ्रमतारण्यमध्यतः १० राज्ञेविज्ञाप्य
तत्सर्वंसोपिमृत्युवशंगतः सुग्रीवेणसमंसख्यामर्जयन्समजायत ११ वानराणामनीकानिरामार्थंसंगतानिवै ततोहनूमतादृष्टालंकोद्याने
तुजानकी १२ रामसंज्ञापनंतस्यैदत्तंकर्ममहत्कृतं समेत्यरामेणपुनःसर्वंतत्रनिवेदितं १३ अथश्रुत्वारामचंद्रोवाक्यंचैवहनूमतः सुग्री-
वानुमतेनैवप्रस्थानंसमरोचयत् १४ सगत्वावानरैःसार्द्धंतीरंनदनदीपतेः दृष्ट्वाब्धिंदुस्तरंरामोविस्मिताभूत्कपिप्रियः १५ सौत्फुल्ललोच-
नोभूत्वालक्ष्मणंवाक्यमब्रवीत् सौमित्रेकेनपुण्येनतीर्यतेवरुणालयः १६ अगाधसलिलःपूर्णोनक्रैरूर्मिभिःसमाकुलः उपायंनैवपश्या-
मियेनैवस्कृतरोभवेत् १७ लक्ष्मणउवाच आदिदेवस्त्वमेवासिपुराणपुरुषोत्तमः बकदाल्भ्योमुनिश्चात्रवर्ततेद्वीपमध्यतः १८ अ-
स्मात्स्थानाद्योजनार्द्धेमाश्रमस्तस्यराघव अनेनदृष्टाब्रह्माणोबहवोरघुनंदन १९ तंपृच्छगत्वाराजेंद्रपुराणमृषिपुंगवं इतिवाक्यंततः
श्रुत्वालक्ष्मणःस्यातिशोभनं २० जगामराघवोद्रष्टुंवकदाल्भ्यंमहामुनिं प्रणनाममुनिंमूर्ध्नारामोविष्णुमिवामरः २१ मुनिर्ज्ञात्वाततोरा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मंपुराणपुरुषोत्तमं केनापिकारणेनैव भविष्टंमानुषींतनुं २२ उवाचसंक्षिप्तस्तत्रकुतोरामतवागमः रामउवाच त्वत्प्रसादादहोविप्रवरुणाल
यसन्निधिं २३ आगतोस्मिससैन्योत्रलंकांजेतुंसराक्षसीं भवतश्चानुकूल्येनतीर्यतेब्धिर्यथामया २४ तमुपायंवदमुनेप्रसादंकुरुसुव्रत
एतस्मात्कारणादेवद्रष्टुंत्वाहमुपागतः २५ मुनिरुवाच कथयिष्याम्यहंरामव्रतानामुत्तमव्रतं कृतेनयेनसहसाविजयस्ते भविष्यति २६ लं
कांजित्वाराक्षसांश्चदीर्घांकीर्तिमवाप्स्यसि एकाग्रमानसोभूत्वाव्रतमेतत्समाचर २७ फाल्गुनस्यासितेपक्षेविजयैकादशीभवेत् तस्याव्रतेनकृ
तेरामविजयस्तेभविष्यति २८ निःसंशयंसमुद्रंचतरिष्यसिसवानरः विधिस्तुश्रूयतांरामव्रतस्यास्यफलप्रदः २९ दशमीदिवसेप्राप्तेकुंभमे-
कंचकारयेत् हैमंवाराजतंवापिताम्रंवाप्यथमृन्मयं ३० स्थापयेच्छोभितंकुंभंजलपूर्णंसपल्लवं तस्योपरिन्यसेद्देवंहैमंनारायणंप्रभुं ३१
एकादशीदिनेप्राप्तेप्रातःस्नानंसमाचरेत् निश्चलंस्थापयेत्कुंभंगंधमाल्यानुलेपनैः ३२ दाडिमैर्नारिकेरैश्चपूजयेच्चविशेषतः सप्तधा-
न्यान्यधस्तत्रयवानुपरिविन्यसेत् ३३ गंधैर्धूपैस्तथादीपैर्नैवेद्यैर्विविधैरपि कुंभाग्रेतद्दिनंरामनीयतेभक्तिभावतः ३४ रात्रौजागरणंतत्र
तस्याग्रेकारयेद्बुधः द्वादशीदिवसेप्राप्तेमार्तंडस्योदयंप्रति ३५ नीत्वाकुंभंजलोद्देशेनद्याःप्रस्रवणेतथा तडागेस्थापयित्वावापूजयि-
त्वायथाविधि ३६ दद्यात्सदैवतंकुंभंब्राह्मणेवेदपारगे कुंभेनसहराजेंद्रमहादानानिदापयेत् ३७ अनेनविधिनारामयूथपैःसहसंग
तः कुरुव्रतंप्रयत्नेनविजयस्तेभविष्यति ३८ इतिश्रुत्वावचोरामोयथोक्तमकरोत्तथा कृतेव्रतेसविजयीबभूवरघुनंदनः ३९ अनेन



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

विधिनाराजन्येकुर्वंतिनराव्रतं इहलोकेजयस्तेषां परलोकस्तथाक्षयः ४० एतस्मात्कारणात्पुत्र कर्तव्यंविजयाव्रतं विजयायाश्चमाहात्म्यं
सर्वकिल्बिषनाशनं ४१ पठनाच्छ्रवणात्तस्य वाजपेयफलंलभेत् ४२ इतिश्रीस्कंदपुराणेफाल्गुनकृ० विजयामाहात्म्यंसमाप्तं अथफा-
ल्गुनशुक्लैकादशीकथा मांधातोवाच वदब्रह्मन्महाभागयेनश्रेयोभवेन्मम ईदृग्ब्रूहिब्रह्मन्योनेयद्यनुग्रहतामयि १ सरहस्यंसेतिहासंव्र
तानामुत्तमंव्रतं वसिष्ठउवाच कथयाम्यधुनातुभ्यंसर्वव्रतफलप्रदं २ आमलक्याव्रतंराजन्महापातकनाशनं मोक्षदंसर्वलोकानांगोसह-
स्रफलप्रदं ३ अत्रैवोदाहरंतीममितिहासंपुरातनं यथामुक्तिमनुप्राप्तोव्याधोहिंसासमन्वितः ४ वैदिशंनामनगरंहृष्टपुष्टजनावृतं ब्रा
ह्मणैःक्षत्रियैर्वैश्यैः शूद्रैश्चसमलंकृतं ५ रुचिरंनृपशार्दूल ब्रह्मघोषनिनादितं ननास्तिकोदुष्कृतिकस्तस्मिन्पुरवरेसदा ६ तत्रसो
मान्वयोराजाविख्यातःशासबिंदुकः राजाचैत्ररथोनाम धर्मात्मासत्यसंगरः ७ नागायुतबलःश्रीमान् शस्त्रशास्त्रार्थपारगः तस्मि
न्शासतिधर्मज्ञे धर्मात्मनिधरांप्रभो ८ कृपणोनैवकुत्रापिदृश्यतेनैवनिर्धनः सुकालःक्षेममारोग्यंतस्मिन्राज्यंप्रशासति ९
विष्णुभक्तिरतालोकास्तस्मिन्पुरवरेसदा हरिपूजारताश्चैवराजाचापिविशेषतः १० नशुक्लांनैवकृष्णांतद्द्वादशीभुंजतेजनाः सर्वधर्मान्परित्यज्यहरिभक्तिपरायणाः ११ एवंसंवत्सराजग्मुर्बहवोराजसत्तम जनस्यसौख्ययुक्तस्यहरिभक्तिरतस्यच १२ अथकालेन
संप्राप्ताद्वादशीपुण्यसंयुता फाल्गुनस्यासितेपक्षेनाम्नात्वामलकीस्मृता १३ तामवाप्यजनाःसर्वेबालकाःस्थविरानृप नियमंचो

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ब्र॰रा॰
१९८

पवासंचसर्वेचक्रुर्नराविभो १४ महाफलंव्रतंज्ञात्वास्नानंकृत्वानदीजले तत्रदेवालयेराजालोकैर्युक्तोमहाप्रभुः १५ पूर्णकुंभमवस्थाप्य छ-
त्रोपानहसंयुतं पंचरत्नसमायुक्तंदिव्यगंधाधिवासितं १६ दीपमालान्वितंचैवजामदग्न्यसमन्वितं पूजयामासकरेव्यग्राधात्रींचमुनिभि-
र्जनाः १७ जामदग्न्यनमस्तेस्तुरेणुकानंदवर्धन आमलकीकृतच्छाय भुक्तिमुक्तिवरप्रद १८ धात्रिधातृसमुद्भूतेसर्वपातकनाशि-
नि आमलकीनमस्तुभ्यंगृहाणार्घ्योदकंमम १९ धात्रिब्रह्मस्वरूपासित्वंतुरामेणपूजिता प्रदक्षिणाविधानेनसर्वपापहराभव २०
तत्रजागरणंचक्रुर्जनाःसर्वेस्वभक्तितः एतस्मिन्नेवकालेतुव्याधस्तत्रसमागतः २१ क्षुधाश्रमपरिव्याप्तोमहाभारेणपीडितः कु-
टुंबार्थेजीवघातीसर्वधर्मबहिष्कृतः २२ जागरंतत्रसोपश्यदामलक्याःक्षुधान्वितः दीपमालाकुलंदृष्ट्वातत्रैवनिषसादसः २३ किमेत-
दितिसंचिंत्यमानोविस्मयतांभृशं ददर्शकुंभंतत्रस्थंदेवंदामोदरंतथा २४ ददर्शामलकीवृक्षंतत्रस्थांश्चैवदीपकान् वैष्णवांश्चतथाख्या-
नंकथ्याचपठतांनृणां २५ एकादश्याश्चमाहात्म्यकथ्याचक्षुधितोपिसन् जाग्रतस्तस्यसारात्रिर्गताविस्मितचेतसः २६ ततःप्रभातसमये
विविशुर्नगरंजनाः व्याधोपिगृहमागत्यबुभुजेप्रीतमानसः २७ ततःकालेनमहताव्याधःपंचत्वमागतः एकादश्याःप्रभावेनरात्रौ-
जागरणेनच २८ राज्यंप्रपेदेसुमहच्चतुरंगबलान्वितं जयंतीनामनगरीतत्रराजाविदूरथः २९ तस्मात्सतनयोजज्ञेनाम्नावसुरथोबली
चतुरंगबलोपेतोधनधान्यसमन्वितः ३० दशायुतानिग्रामाणांबुभुजेभयवर्जितः तेजसादित्यसदृशःकांत्याचंद्रसमप्रभः ३१ परा

ए॰मा॰
११

१९८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्रमेविष्णुसमः क्षमयापृथिवीसमः धार्मिकःसत्यवादीचविष्णुभक्तिपरायणः ३२ ब्रह्मज्ञः कर्मशीलश्चप्रजापालनतत्परः यजते-
विविधान्यज्ञान्सराजापरदर्पहा ३३ दानानिविविधान्येवप्रददातिचसर्वदा एकदामृगयांयातोदैवान्मार्गपरिच्युतः ३४ नदिशोनैव-
विदिशोवेत्तितत्रमहीपतिः उपधायचदोर्मूलमेकाकीगहनेवने ३५ श्रांतश्चक्षुधितोत्यंतंसंविवेशमहीपतिः अत्रांतरेम्लेच्छगणःप
र्वतांतरवासभुक् ३६ आययौतत्रयत्रास्तेराजापरबलार्दनः कृतवैरास्तुतेराज्ञासर्वेदैवोपतापिताः ३७ परिवार्यततस्तस्थूराजानं
भूरिदक्षिणं हन्यतांहन्यतांचायंपूर्ववैरविरुद्धधीः ३८ अनेननिहताःपूर्वंपितरोभ्रातरःसुताः पौत्राश्चभागिनेयाश्चमातुलाश्चनि-
पातिताः ३९ निष्कासितास्चस्वस्थानाद्विक्षिप्ताश्चदिशोदश एतावदुक्त्वातेसर्वेतत्रैनंहंतुमुद्यताः ४० पाशैश्चपट्टिशैःखड्गैर्बाणैर्धनु
र्भिःसंस्थितैः सर्वतोरिगणास्तेनराजानंहंतुमुद्यताः ४१ सर्वाणिशस्त्राणिसमाद्रवंतिनवैशरीरेप्रविशंतितस्य तेचापिसर्वेहतशस्त्रसंघाम्ले
च्छाबभूवुर्गतदेहजीवाः ४२ यदापिचलितंतत्रनशेकुस्तेरयोभृशं शस्त्राणिकुंठितांजग्मुःसर्वेषांहतचेतसां ४३ दीनाबभूवुस्तेसर्वेयेतंह
तुंसमागताः एतस्मिन्नेवकालेतुतस्यराज्ञःशरीरतः ४४ निःसृताप्रमदात्येकासर्वावयवशोभना दिव्यगंधसमायुक्तादिव्याभरणभूषिता
४५ दिव्यमाल्यांबरधराभ्रूकुटीकुटिलानना स्फुलिंगाभ्यांचनेत्राभ्यांपावकंवमतीबहु ४६ चक्रोद्यतकराचैवकालरात्रिरिवापरा अभ्य-
धावत्तंसंक्रुद्धान्म्लेच्छानत्यंतदुःखितान् ४७ निहताश्चयदाम्लेच्छास्तेविकर्मरतास्तथा ततोराजाविबुद्धःसन्ददर्शमहदद्भुतं ४८ हतान्म्लेच्छ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गणंदृष्ट्वाराजाहर्षमवापसः इहकेनहतान्म्लेच्छाअत्यंतंवैरिणोमम ४९ केनचेदंमहत्कर्मकृतमस्मद्धितार्थिना एतस्मिन्नेवकालेतुवागुवा
चाशरीरिणी ५० तंस्थितंनृपतिंदृष्ट्वानिकामंविस्मयान्वितं शरणंकेशवादन्योनास्तिकोपिद्वितीयकः ५१ वनात्तस्मात्सकुशलीस
मायानोपिपक्षिभिक्षुकः राज्यंचकारधर्मात्माधरायांदेवतेशवत् ५२ वसिष्ठउवाच तस्मादामलकीराजन्येकुर्वंतिनरोत्तमाः तेयांतिवैष्ण
वंलोकंनात्रकार्याविचारणा ५३ इतिश्रीब्रह्मा॰फाल्गुनशुक्लैकादशीमाहात्म्यंसंपूर्णं अथचैत्रकृष्णैकादशीकथा युधिष्ठिरउवाच
फाल्गुनस्यसितेपक्षेश्रुतासामलकीमया चैत्रस्यकृष्णपक्षेतुकिन्नामैकादशीभवेत्१ श्रीकृष्णउवाच शृणुराजेंद्रवक्ष्यामिअज्ञात-
पापनाशनं यल्लोमशोब्रवीत्स्पृष्टोमांधात्राचक्रवर्तिना २ मांधातोवाच भगवन्श्रोतुमिच्छामिलोकानांहितकाम्यया चैत्रमास्यसि-
तेपक्षेकिन्नामैकादशीभवेत् ३ कोविधिःकिंफलंतस्याःकथयस्वप्रसादतः लोमशउवा॰ श्रूयतांराजशार्दूलकामदांसिद्धिदांतथा
कथांविचित्रांशुभदांपापहांधर्मदायिनीं ४ पुराचैत्ररथोद्देशेअप्सरोगणसेविते वसंतसमयेमासेपुष्पैराकुलितेवने ५ गंधर्व
कन्यास्तत्रैवरमंतिसहकिन्नरैः पाकशासनमुख्याश्चक्रीडंतेचदिवौकसः ६ नापरंसुंदरंकिंचिद्वनाच्चैत्ररथाद्वनं तस्मिन्वनेतुमुनय-
स्तपंतिबहुलंतपः ७ सहदेवैस्तुमघवारमतेमधुमाधवौ एकोमुनिवरस्तत्रमेधावीनामनामतः ८ अप्सरास्तंमुनिवरंमोहनायोपच
क्रमे मंजुघोषेतिविख्याताभावंतस्यविचिन्वती ९ क्रोशमात्रंस्थितातस्यभयादाश्रमसन्निधौ गायंतीमधुरंसाधुपीडयंतीविपंचिकां१०





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गायंतीतामथालोक्यपुष्पचंदनवेष्टितां कामोपिविजयाकांक्षीशिवभक्तंमुनीश्वरं ११ तस्याःशरीरसंसर्गंशिववैरमनुस्मरन् तुल्यभ्रुवो
धनुष्कोटीगुणंकृत्वाकटाक्षकं १२ मार्गणौनयनेकृत्वापक्षयुक्तौयथाक्रमं कुचौकृत्वापटकुटीविजयायोपसंस्थितः १३ मंजुघोषाभवत्तत्र
कामस्येववरूथिनी मेधाविनंमुनिंदृष्ट्वासापिकामेनपीडिता १४ यौवनोद्भिन्नदेहोसौमेधाव्यतिविराजते सितोपवीतसहितोदंडीस्मरइवापरः १५ मेधावीवसतिस्मासौच्यवनस्याश्रमेशुभे मंजुघोषास्थितातत्रदृष्ट्वातंमुनिपुंगवं १६ मदनस्यवशंप्राप्तामंदंमंदमगायत रणद्वल-
यसंयुक्तासिंजन्नूपुरमेखला १७ गायतींभावसंयुक्तांविलोक्यमुनिपुंगवः मदनेनससैन्येननीतोमोहवशेबलात् १८ मंजुघोषासमा
गम्यमुनिंदृष्ट्वातथाविधं हावभावकटाक्षैस्तुमोहयामासचांगना १९ अधःसंस्थाप्यवीणांसा सस्वजेतंमुनीश्वरं वल्लीवाकुलितावृक्षे
वातवेगेनवेपिता २० सोपिरेमेतयासार्द्धंमेधावीमुनिपुंगवः तस्मिन्नेववनोद्देशेदृष्ट्वातद्देहमुत्तमं २१ शिवतत्त्वंगतंतस्यकामतत्त्ववशंगतः
ननिशानदिनंसोपिरमन्जानातिकामुकः २२ बहुलश्चगतःकालोमुनेराचारलोपकः मंजुघोषादेवलोकंगमनायोपचक्रमे २३ गच्छंतीम्प्र-
त्युवाचाथरमतेमुनिपुंगवः आदेशोदीयतांब्रह्मन्स्वधामगमनायमे २४ मेधाव्युवाच अद्यैवत्वंसमायाताप्रदोषादौवरानने यावत्प्रभा
तसंध्यास्यात्तावत्तिष्ठममांतिके २५ इतिश्रुत्वामुनेर्वाक्यंभयभीताबभूवसा पुनर्वैरमयामासतंमुनिंऋषिसत्तमं २६ मुनिशापभयाद्भीता
बहुलान्परिवत्सरान् वर्षाणांपंचपंचाशच्छतंमासान्दिनत्रयं २७ सारेमेमुनिनातेननिशार्धमिवचाभवत् साचतंप्रत्युवाचाथतस्मिन्कालेग

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तेमुनिं आदेशोदीयतांब्रह्मन्गंतव्यंस्वगृहेमम मेधाव्युवाच प्रातःकालोधुनेवास्तेश्रूयतांवचनंमम कुर्वेसंध्यांदिनेयावत्तावत्वंवैस्थि-
राभव २९ इतिवाक्यंमुनेःश्रुत्वाभयेनचसमाकुला स्मितंकृत्वातुसाकिंचित्प्रत्युवाचसुविस्मिता ३० अप्सराउ॰ कियत्प्रमाणाविप्रें
द्रतवसंध्यागतानवा मयिप्रसादंकृत्वातुगतःकालोविचार्यतां ३१ इतितस्यावचःश्रुत्वाविस्मयोत्फुल्ललोचनः संध्यात्वाहृदिविप्रेंद्रः
प्रमाणमकरोत्तदा ३२ समाश्चसप्तपंचाशद्गताममतयासह नेत्राभ्यांविस्फुलिंगान्समुंचमानोतिकोपनः ३३ कालरूपांचतान्दृ-
ष्ट्वातपसःक्षयकारिणीं दुःखार्जितंममतपोनीतंतदनयाक्षयं ३४ सकंपोष्ठोमुनिस्तत्रप्रत्युवाचाकुलेंद्रियः सतांशशापमे
धावीत्वंपिशाचीभवेतिच ३५ धिक्त्वांपापेदुराचारे कुलटेपातकप्रिये तस्यशापेनसादग्धाविनयावनतास्थिता ३६ उवाच-
वचनंसुभ्रूःप्रसादंवांछती मुनिं प्रसादंकुरुविप्रेंद्रशापस्यानुग्रहंकुरु ३७ सतांसंगोहिफलतिवचोभिःसप्तमेपदे त्वयासहम-
मब्रह्मन्गताःसुबहवःसमाः ३८ एतस्मात्कारणात्स्वामिन्प्रसादंकुरुसुव्रत मुनिरुवाच शृणुमेवचनंभद्रेशापानुग्रहकारकं
किंकरोमित्वयापापेक्षयंनीतंमहत्तपः ३९ चैत्रस्यकृष्णपक्षेयाभवेदेकादशीशुभा पापमोचनिकानामसर्वपापक्षयंकरी ४०
तस्याव्रतेकृतेसुभ्रुपिशाचत्वंप्रयास्यति इत्युक्त्वातांसमेधावीजगामपितुराश्रमं ४१ तमागतंसमालोक्यवचनंप्रत्युवाचह किं
मेतद्विहितंपुत्रत्वयापुण्यक्षयःकृतः ४२ मेधाव्युवाच पापंकृतंमहत्तातरमिताचाप्सरामया प्रायश्चित्तंब्रूहितातयेनपापक्षयोभ





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वेत् ४३ च्यवनउ० चैत्रस्यचासितेपक्षेनाम्नावैपापमोचनी अस्याव्रतेकृतेपुत्रपापराशिःक्षयंव्रजेत् ४४ इतिश्रुत्वा पितुर्वाक्यंकृ
तंतेनव्रतोत्तमं गतंपापंक्षयंतस्यपुण्ययुक्तोबभूवसः ४५ सोप्येवंमंजुघोषाचकृत्वातद्व्रतमुत्तमं पिशाचत्वविनिर्मुक्तापापमोचनिकाव्र
तात् ४६ दिव्यरूपधरासापिगतानाकंवराप्सरा लोमशउ० इत्थंभूतप्रभावंहिपापमोचनिकाव्रतं ४७ पापमोचनिकांराजन्येकुर्वंतिच्चमा
नवाः तेषांपापंचयत्किंचित्तत्सर्वंक्षयतांव्रजेत् ४८ पठनाच्छ्रवणाद्वाऽपिगोसहस्रफलप्रदा ब्रह्महाहेमहारीचसुरापोगुरुतल्पगः व्रतस्यचा
स्यकरणात्पापमुक्ताभवंतिते बहुपुण्यप्रदंह्येतत्करणाद्व्रतमुत्तमं ५० इतिश्रीभ० चैत्रकृष्णपापमोचनीकानामैकादशीमा० स० अथचै
त्रशुक्लैकादशीकथा सूतउवाच देवकीनंदनंकृष्णंवसुदेवात्मजंहरिं नमस्कृत्वाप्रवक्ष्यामिमहापातकहानितु १ युधिष्ठिरायकृष्णेनकथि
तानिमहात्मना एकादशीमहात्म्यानिनानापापहराणिच २ अष्टादशपुराणेभ्योविविच्यसुमहात्मना चतुर्विंशतिसंख्यानिनानाख्यानै-
र्युतानिच ३ तानिवक्ष्यामिभोविप्राः शृणुध्वंसुसमाहिताः युधिष्ठिरउ० वासुदेवनमस्तुभ्यंकथयस्वममाग्रतः ४ चैत्रस्यशुक्लपक्षेतुकिं
न्नामैकादशीभवेत् श्रीकृष्णउ० शृणुष्वेकमनाराजन्कथामेकांपुरातनीं ५ वसिष्ठोयामकथयत्पुरादिलीपायपृच्छते दिलीपउवाच भग
वन्श्रोतुमिच्छामिकथयस्वप्रसादतः ६ चैत्रमासिसितेपक्षेकिंन्नामैकादशीभवेत् वसिष्ठउवाच साधुपृष्टंनृपश्रेष्ठकथयामितवाग्रतः
चैत्रस्यशुक्लपक्षेतुकामदानामनामतः ७ एकादशीपुण्यतमापापेंधनदवानला शृणुराजन्कथामेतांपापघ्नींपुत्रदायिनीं ८ पुराभो

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गिपुरेरम्येहेमरत्नविभूषिते पुंडरीकमुखानागानिवसंतिमदोत्कटाः ९ तस्मिन्पुरेपुंडरीकोराजाराज्यंकरोतिच गंधर्वैःकिन्नरैश्चै
वत्यप्सरोभिःससेव्यते १० वराप्सरातुललितागंधर्वोललितस्तथा उभौरागेणसंयुक्तौदंपतीकामपीडितौ ११रेमातेस्वगृहेरम्येधनधा-
न्ययुतेसदा ललितायास्तुहृदयेपतिर्वसतिसर्वदा १२हृदयेतस्यललितानित्यंवसतिभामिनी एकदापुंडरीकाद्याःक्रीडंतिसदसि स्थि
ताः १३गीतमानंप्रकुरुतेललितोदयितांविना पदबंधस्खलज्जिव्होबभूवललितास्मरन् १४ मनोभावंविदित्वास्यकर्कोटोनागसत्तमः
पदबंधच्युतिंतस्यपुंडरीकेन्यवेदयत् १५ सशापलळितंतत्रमदनातुरचेतसं राक्षसोभवदुर्बुद्धेक्रव्यादःपुरुषादकः १६ यतःपत्नीवशोजातो
गायमानोममाग्रतः वचनात्तस्यराजेंद्ररक्षोरूपोबभूवह १७ रौद्राननोविरूपाक्षोदृष्टमात्राभयंकरः बाहूयोजनविस्तीर्णौमुखंकंदरसन्निभं
१८ चंद्रसूर्यनिभेनेत्रेग्रीवापर्वतसन्निभा नासारंध्रेतुविवरेअधरौयोजनार्धकौ १९ शरीरंतस्यराजेंद्रउच्छ्रितंयोजनाष्टकं ईदृशोराक्षसःसो
भूत्भुंजानःकर्मणःफलं २० ललितातमथालोक्यस्वपतिंविकृताकृतिं चिंतयामासमनसादुःखेनमहतार्दिता २१ किंकरोमिक्वगच्छामिप
तिःपापेनपीडितः इतिसंस्मृत्यमनसानशर्मलभतेतुसा २२ चचारपतिनासार्द्धंललितागहनेवने बभ्रामविपिनेदुर्गेकामरूपःसराक्षसः
२३ निर्घृणःपापनिरतोविरूपःपुरुषादकः नसुखंलभतेरात्रौनदिवापापपीडितः २४ ललितादुःखितातीवपतिंदृष्ट्वातथाविधं भ्रमंतीते
नसार्धंसारुदंतीगहनेवने २५ कदाचिदगमद्विंध्यशिखरेबहुकौतुके ऋष्यशृंगमुनेस्तत्रदृष्ट्वाश्रमपदंशुभं २६ शीघ्रंजगामललिताविनयाव




CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नत्वास्थिता भर्तृवाचमुनिर्दृष्ट्वाकात्वंकस्यसुताशुभे २७ किमर्थंहिसमायातासत्यंवदममाग्रतः ललितोवाच वीरधन्वेतिगंधर्वःसु
तातस्यमहात्मनः २८ ललितांनाममांविद्धिपत्यर्थमिहचागतां भर्तामेशापदोषेणराक्षसोभून्महामुने २९ रौद्ररूपोदुराचारस्तंदृष्ट्वानास्ति
मेसुखं सांप्रतंशाधिमांब्रह्मन्प्रायश्चित्तंवदप्रभो ३० येनपुण्येनविप्रेंद्रराक्षसत्वाद्विमुच्यते ऋषिरुवा० चैत्रमासस्यरंभोरुशुक्लपक्षस्य
सांप्रतं ३१ कामदैकादशीनाम्नायाकृताकामदानृणां कुरुष्वतद्व्रतंभद्रेविधिपूर्वंमयोदितं ३२ तस्यव्रतस्ययत्पुण्यंतत्स्वभर्त्रेप्रदीयतां द
त्तेपुण्येक्षणात्तस्यशापदोषःप्रशाम्यति इतिश्रुत्वामुनेर्वाक्यंललिताहर्षिताभवत् उपोष्यैकादशींराजन्द्वादशीदिवसेतदा ३४ वि
प्रस्यैवसमीपेतुवासुदेवाग्रतःस्थिता वाक्यमूचेतुललितास्वपत्युस्तारणायवै ३५ मयातुयद्व्रतंचीर्णंकामदायाउपोषणं तस्यपुण्यप्र
भावेनगच्छत्वस्यपिशाचता ३६ ललितावचनादेववर्तमानोपितत्क्षणे गतपापःसललितोदिव्यदेहोबभूवह ३७ राक्षसत्वंगतंतस्यप्राप्तोगंधर्वतां
पुनः हेमरत्नसमाकीर्णोरेमेललितयासह ३८ तौविमानसमारूढौपूर्वरूपाधिकावुभौ दंपतीचापिशोभेतांकामदायाःप्रभावतः ३९ इतिज्ञा
त्वानृपश्रेष्ठकर्तव्येषाप्रयत्नतः लोकानांचहितार्थायतवाग्रेकथितामया ४० ब्रह्महत्यादिपापघ्नीपिशाचत्वविनाशिनी नातःपरतराकाचि
त्त्रैलोक्येसचराचरे ४१ पठनाच्छ्रवणाद्वापिवाजपेयफलंलभेत् इतिश्रीवाराहपुराणेचैत्रशु० कामदानामैकादशीमाहात्म्यंसमाप्तं अथ
वैशाखकृष्णैकादशीकथा युधिष्ठिरउ० वैशाखस्यासितेपक्षेकिन्नामैकादशीभवेत् महिमानंकथयमेवासुदेवनमोस्तुते १ श्री

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कृष्णउवाच सौभाग्यदायिनीराजन्निहलोकेपरत्रच वैशाखकृष्णपक्षेतुनाम्नाचैववरूथिनी २ वरूथिन्याव्रतेनैवसौख्यंभवति
सर्वदा पापहानिश्चभवतिसौभाग्यप्राप्तिरेवच ३ दुर्भगापिकरोत्येनांस्त्रीसौभाग्यमवाप्नुयात् लोकानांचैवसर्वेषांभुक्तिमुक्ति
प्रदायिनी ४ सर्वपापहरानृणांगर्भवासनिकृंतनी वरूथिन्याव्रतेनैवमांधातास्वर्गतिंगतः ५ धुंधुमारादयश्चान्येराजानोबहव
स्तथा ब्रह्मकपालनिर्मुक्तोबभूवभगवान्भवः ६ दशवर्षसहस्राणितपस्तप्यातियोनरः तत्तुल्यंफलमाप्नोतिवरूथिन्याव्रतादपि
७ श्रद्धावान्यस्तुकुरुतेवरूथिन्याव्रतंनरः वांछितंलभतेसोपिइहलोकेपरत्रच ८ पवित्रापावनीत्येषामहापातकनाशिनी भु
क्तिमुक्तिप्रदात्येषाकर्तृणांनृपसत्तम ९ अश्वदानान्नृपश्रेष्ठगजदानंविशेषतः गजदानाद्भूमिदानंतिलदानंततोधिकं १० ततःसु
वर्णदानंतुअन्नदानंततोधिकं अन्नदानात्परंदानंनभूतंनभविष्यति ११ पितृदेवमनुष्याणांतृप्तिरन्नेनजायते तत्समंकविभिः
प्रोक्तंकन्यादानंनृपोत्तम १२ धेनुदानंचतत्तुल्यमित्याहभगवान्स्वयं प्रोक्तेभ्यःसर्वदानेभ्योविद्यादानंविशिष्यते १३ तत्फलंसमवा
प्नोतिनरःकृत्वावरूथिनी कन्यावित्तेनजीवंतियेनराःपापमोहिताः १४ तेनरानरकंयांतियावदाभूतसंप्लवं तस्मात्सर्वप्रयत्नेन
नग्राह्यंकन्यकाधनं १५ यश्चगृण्हातिलोभेनकन्यांक्रीत्वाचतद्धनं सोन्यजन्मनिराजेंद्रओतुर्भवतिनिश्चितं १६ कन्यांवित्तेनयोदद्या-
द्यथाशक्तिस्वलंकृतां तत्पुण्यसंख्यांकर्तुंहिचित्रगुप्तोभवत्यलं १७ तत्फलंसमवाप्नोतिनरःकृत्वावरूथिनीं कांस्यंमांसंमसूरान्नं-





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

